श्रीउमास्वातिवाचकविरचितम्

# प्रशमरतिप्रकरणम्

सटीकमवचूरिसहितम्

श्रीवणथळीनिवासी सुश्रावक संघवी हरजीवनदास मुळजीनी आर्थिक सहायवडे शुद्ध करी छपावी प्रसिद्ध करनार,

श्रीजैनधर्मप्रसारक सभा.

भावनगर.

वीरसंवत् २४३६. विक्रम संवत् १९६६.

श्रीमुंबई--कोलभाटलेन घर नं. २३ मां आवेला निर्णयसागर प्रेसमां बाळकृष्ण रामचंद्र घाणेकरे प्रकाशक माटे छाप्यो.

आ ग्रंथ प्रगट करवामां आर्थिक सहाय आपनार गृहस्थनी उदार वृत्तिने अनुसरीने आ ग्रंथ संस्कृतना अभ्यासी मुनिमहाराज तथा साध्वी समुदायने भेट दाखल आपवानो छे, तेथी तेना अभिलाषीए मंगावी लेवा कृपा करवी. जैनपुस्तकालय विगेरे जाहेर जैनसंस्थावालाओए तेमज पुस्तकभंडारना व्यवस्थापकोए पोस्टेज चार आना मोकलीने मंगावी लेवो.

प्रस्तावनानी अंदर अनुक्रमणिकानो समावेश करवामां आवेलो होवाथी अनुक्रमणिका जुदी लखवामां आवी नथी.

---

छपावी प्रसिद्ध करनार–श्रीजैनधर्मप्रसारक सभानी वती शा. कुंवरजी आणंदजी. भावनगर.

# प्रस्तावना ।

इह हि जन्मजरामरणाधिव्याधिव्याकुलेऽसारे संसारे भ्रमद्भिर्जीवैः कथमपि मर्त्यत्वमाप्य संसृतिमूलं कर्म समूलमुन्मूल्य मुक्त्यङ्गनालिङ्गनसुखाय यतितव्यमित्येतमेव भव्यजीवोद्धरणबद्धकटीनां श्रीमज्जिनेश्वराणामुपदेशमनुसृत्यानेकैः पूर्वसूरिभिः कर्मक्षपणोपायभूता अनेके ज्ञानक्रियाभक्त्यादिप्रतिपादका ग्रन्था ग्रथिताः । तेभ्यश्च सारमुद्धृत्य समुद्धृतमिदं प्रशमरतिनाम प्रकरणं वैराग्यरसतरङ्गतरङ्गिणीसिष्णासूनामल्पायुर्मेधानां भव्यप्राणिनां सानन्दमुपकाराय पञ्चशतप्रकरणसौधावलिसूत्रणसूत्रधारैः समस्तश्वेताम्बरकुलाम्बररजनीवल्लभैरन्यूनदशपूर्वधरैः श्रीउमास्वातिवाचकमुख्यैः । पूज्यपादाश्चेमे कदा कतमं भूमिमण्डलं स्वपादन्यासैर्मण्डयामासुः ? का च प्रकरण पञ्चशती तन्निर्मितेति सम्यग्नावगम्यते ।

प्रकरणस्यास्य संक्षिप्तत्वागूढाशयत्वाच्चान्यैर्महाशयैराचार्यैर्विविधाष्टीकाः कृताः सन्ति, परं ताः कैः कैर्निर्मिता इत्येतत्कुत्राप्युल्लेखाभावान्न निश्चीयते, अतोऽस्मन्मुद्रितैतट्टीकाकर्तुर्नामात्र नाङ्कितुं शक्यते । अत्र मुद्रितं विवरणं त्वस्य विवृतं श्रीहरिभद्राचार्यैरिति—"श्रीहरिभद्राचार्यै रचितं प्रशमरतिविवरणं किञ्चित् । परिभाव्य वृद्धटीकाः सुखबोधार्थं समासेन ॥ १ ॥ अणहिलपाटकनगरे श्रीमज्जयसिंहदेव नृपराज्ये । बाणवसुरुद्र ( ११८५ ) संख्ये विक्रमतो वत्सरे व्रजति ॥ २ ॥ श्रीधवलभाण्डशालिकपुत्रयशोनागनायकवितीर्णे । सद्‌पाश्रये स्थितैस्तैः समर्थितं शोधितं चेति ॥ ३ ॥" इत्यादिना निश्चीयते । इदं च विवरणं प्रतिपत्राणां जीर्णत्वात्प्रभूतस्थलेषु खण्डितत्वेन प्रत्यन्तरालाभात् कृपापरैर्मनीषिभिः पं० श्रीमज्जम्भी-

रविजयगणिभिः कृपाप्रधानानां सतां विदुषां स्वमतिभ्रमस्खलनशोधनायाभ्यर्थ्य सन्धितमिति तेषां महोपकारकारित्वम् ।

इह च प्रकरणे १ पीठबन्धः, २ कषायाः, ३ रागादयः, ४ अष्टविधं कर्म, ५ पञ्चेन्द्रियविषयाः, ६ अष्टौ मदस्थानानि, ७ आचारः, ८ भावना, ९ दशविधो धर्मः, १० धर्मकथा, ११ जीवादिनवतत्त्वानि, १२ उपयोगः, १३ भावाः, १४ षड्विधं द्रव्यं, १५ चरणं, १६ शीलांगानि, १७ ध्यानं, १८ क्षपकश्रेणिः, १९ समुद्घातः, २० योगनिरोधः, २१ मोक्षगमनविधानं, २२ अन्तफलं चेति द्वाविंशत्यधिकारा मुख्याः । तथा हि–

पीठबन्धाभिधाने प्रथमाधिकारे प्रथमार्याद्वयेन मङ्गलादि, द्वितीयार्याद्वयेनाबहुश्रुतानामत्र दुःप्रवेशं, ततः पञ्चदशश्लोक्या सज्जनचेतश्चमत्कारिणीं स्वलघुतां, वैराग्यरागद्वेषाणां पर्यायांश्चोपन्यस्तवन्त आचार्याः ॥ १ ॥

कषायाख्ये द्वितीयाधिकारे विंशात्त्रयोविंशावधि कीदृगाचरणेन जीवः कषायी भवतीत्येतद्दर्शितं दर्शनचतुरैः ॥ २ ॥

रागाद्यभिधाने तृतीयाधिकारे चतुर्विंशात्त्रयस्त्रिंशत्तमश्लोकैः क्रोधादिकषायैरुत्पद्यमानाननर्थान् रागद्वेषयोः स्वरूपं च प्रतिपादितवन्त आचार्याः ॥ ३ ॥

कर्माख्ये तुर्याधिकारे चतुस्त्रिंशादष्टत्रिंशावधिके प्रकृतिस्थितिरसप्रदेशभेदैः कर्मबन्धस्य विचित्रता तत्कारणं च प्रदर्शितम् ॥ ४ ॥

एकोनचत्वारिंशादारभ्यैकोनाशीतश्लोकपर्यन्ते पञ्चमाधिकारे पञ्चेन्द्रियविषयनामके पञ्चेन्द्रियार्थपराधीनस्यात्मनो हानिः, तान्येव स्ववशीकर्तुश्च स्वाभाविकं सुखं व्यावर्णितम् ॥ ५ ॥

मदस्थानाख्ये षष्ठाधिकारे अशीतादेकोत्तरशततमैर्मदस्याष्टौ भेदाः, ततश्चेहामुत्रानर्थसंभवो जीवस्य दर्शितः ॥ ६ ॥

आचारनाम्नि सप्तमाधिकारे द्व्यधिकशततमादारभ्याष्टचत्वारिंशदधिकशततमपर्यन्ते इन्द्रियजन्यं विषयसुखं किंपाक-फलमिव दुरायति ज्ञात्वा तद्विरक्त्या पञ्चविधाचारसम्यगाराधनतत्परैर्भाव्यं सर्वैः, निर्ग्रन्थैस्तु विशेषत इत्युपदिश्य नि-र्ग्रन्था निर्ग्रन्थत्वसिद्ध्येऽभ्यर्थिताः ॥ ७ ॥

भावनानामन्यष्टमाधिकारे एकोनपञ्चाशदधिकशततमात् षट्षष्ट्युत्तरशततमपर्यन्तेऽनित्याशरणादिद्वादशभेदभिन्नाया भावनायाः स्वरूपं सूक्ष्मदृष्ट्या प्रत्यक्षीकृत्य संयममार्गबाधकविषयकषायादिविकारान्निवारयितुं प्रार्थिता मुमुक्षवो मुमुक्षु सार्थवाहैः ॥ ८ ॥

धर्माधिकारे नवमे सप्तषष्ठ्युत्तरशततमादेकाशीत्यधिकशततमपर्यन्तेन श्लोकसंदर्भेण क्षमामार्दवार्जवादिदशविधयति-धर्माराधनपूर्वकरागद्वेषमोहादिप्रबलदोषदूरीकरणेन सत्साधनयोगेन च वैराग्यवासनावृद्ध्यर्थं विशेषतो यतितव्यमिति साग्रहेण भणितं भणितिदक्षैः ॥ ९ ॥

धर्मकथाभिधाने दशमाधिकारे द्व्यशीत्युत्तरशततमादष्टाशीत्युत्तरशततमपर्यन्तश्लोकैराक्षेपण्यादिधर्मकथाकरणं, स्त्र्यादि-कथात्यजनं, परगुणदोषकीर्तनाद्विशुद्धध्यानस्य श्रेष्ठता, शास्त्राध्ययनाध्यापनतत्त्वचिन्तनादिविधानं, शास्त्रशब्दव्युत्पत्तिश्च व्युत्पादिता व्युत्पन्नैः ॥ १० ॥

जीवादिनवतत्त्वाख्ये एकादशाधिकारे एकोननवत्युत्तरशततमात्रिनवत्युत्तरशततमश्लोकैर्जीवाजीवादिनवतत्त्वनिरूपण-पूर्वकं जीवतत्त्वस्य विविधभेदा भेदिताः स्वपरसमयभेदज्ञैः ॥ ११ ॥

उपयोगनामनि द्वादशाधिकारे चतुर्नवत्युत्तरशततमपञ्चनवत्युत्तरशततमाभ्यामुपयोगस्य साकारानाकारभेदौ आद्य-स्याष्टधात्वमपरस्य च चातुर्विध्यमावेदितं सुविदिततत्त्वैः ॥ १२ ॥

भावाख्ये त्रयोदशाधिकारे षण्णवतिसप्तनवत्युत्तरशततमाभ्यां श्लोकाभ्यां जीवस्यौदयिकादिभावपञ्चकस्य षष्ठस्य सान्निपातिकस्य च भेदा विवृता विवरणनिरतैः ॥ १३ ॥

षड्द्रव्यात्मके चतुर्दशाधिकारेऽष्टनवत्युत्तरशततमात्सप्तविंशत्युत्तरद्विशततमश्लोकसमूहेन जीवस्यौदयिकादिभावैः स्थानादिप्राप्तिः, तस्यैव द्रव्याद्यष्टधात्वं, द्रव्यात्मादीनां स्वरूपं, ऊर्ध्वलोकादिस्वरूपं, नवतत्त्वस्वरूपं, सम्यग्दर्शनसम्यग्-ज्ञानयोश्च लक्षणं लक्षितं लक्षणज्ञधुर्यैः ॥ १४ ॥

चारित्राख्ये पञ्चदशाधिकारेऽष्टाविंशत्युत्तरशतद्वयाद्द्विचत्वारिंशदधिकशतद्वयावधि चारित्रभेदाः, तदाराधनेनात्मलाभसंभवः, प्रशमगुणमाहात्म्यं, तद्योगेन चावर्ण्यसुखप्राप्तिश्चेत्येतत्संक्षेपेण कथितं कथकाग्रगण्यैः ॥ १५ ॥

शीलांगाख्ये षोडशाधिकारे त्रयश्चत्वारिंशदुत्तरशतद्वयात्पञ्चचत्वारिंशदुत्तरशतद्वयपर्यन्तश्लोकत्रितयेन शीलाङ्गस्या-ष्टादशसहस्रभेदभिन्नत्वं तत्प्राप्त्युपायश्चोपपादित उपपत्तिनिपुणैः ॥ १६ ॥

ध्याननामके सप्तदशाधिकारे षट्चत्वारिंशदधिकशतद्वयादेकोनपञ्चाशदधिकशतद्वयावधि धर्मध्यानस्याज्ञाविचयादिन्नेदचतुष्कं, तल्लक्षणानि च लक्षितानि लाक्षणिकैः ॥ १७ ॥

क्षपकश्रेण्यभिधानेऽष्टादशाधिकारे पञ्चाशदधिकशतद्वयादेकसप्तत्यधिकशतद्वयावधिके धर्मध्यानेन मोहादिजयात् क्षपकश्रेणिमारुह्य कर्मोन्मूलनपूर्वकं केवलज्ञानादिशाश्वतार्द्धिप्राप्य जीवोऽव्याबाधमोक्षसुखभाग्भवतीति भावितं भगवद्भिः॥ १८॥

समुद्घातात्मके एकोनविंशाधिकारे द्विसप्तत्यधिकशतद्वयात् षट्सप्तत्यधिकशतद्वयावधिके केवलिन आयुषोऽतिरिक्ततरं कर्मत्रयं समीकर्तुं समुद्घातकरणं तत्प्रकारश्च प्रकाशितः प्रकाशनकुशलैः ॥ १९ ॥

योगनिरोधस्वरूपे विंशाधिकारे सप्तसप्तत्यधिकशतद्वयात् द्व्यशीत्यधिकशतद्वयावधिके समुद्घातान्निवृत्तस्य केवलिनः संपूर्णयोगनिरोधकरणक्रमो दर्शितो दर्शनज्ञवर्यैः ॥ २० ॥

शिवगमनविधानाभिधाने एकविंशाधिकारे त्र्यशीत्यधिकशतद्वयात्पञ्चनवत्यधिकशतद्वयावधिके योगनिरोधानन्तरं केवली भगवान् ह्रस्वपञ्चाक्षरकालमानां शैलेशीं प्रतिपद्य प्रतिसमयं सत्तागतावशिष्टाशेषप्रकृतिक्षपणपूर्वकं देहातीतो भूत्वा समयेनैकेन समश्रेण्या लोकाग्रं गत्वा समग्रजन्मजरामरणरहितः साद्यनन्तानुपमाव्याबाधसुखं प्राप्नोतीत्येतत् सिद्धान्तितं सिद्धमार्गज्ञैः ॥ २१ ॥

अन्तफलाख्ये च द्वाविंशाधिकारे षण्णवत्यधिकशतद्वयान्नवोत्तरशतत्रयावधिके संपूर्णसामग्रीविकलोऽपि मुनिः प्रबलपुरुषार्थाभावेऽपि यथाशक्ति तपोजपसंयमप्रभावेण सद्गतिं प्राप्याचिरेण मोक्षसुखं प्राप्नोति । मुनिमार्गपालनासामर्थ्येऽपि

जिनाज्ञापालनाभिरुचिः श्राद्धोऽणुव्रतादिकथितधर्मानुष्ठानेन सप्ताष्टभवमध्ये सिध्यतीत्यपि संक्षेपेणोदितं वदान्यवर्यैः॥२१॥ ततश्चरमे श्लोकचतुष्टये जिनशासनार्णवाज्जरत्कपर्दिकातुल्येयं धर्मकथिका समुद्धृतेत्युक्त्या स्वलाघवं, दोषत्यागेन गुणग्रहणं, प्रशमसुखार्थं यतना, छन्दःप्रभृतिदूषणमर्षणं, श्रीमदर्हच्छासनजयश्चेत्येतत्कथितं ग्रन्थकर्त्रा ग्रन्थोपसंहारं कुर्वता। इति। उक्तेष्वेष्वधिकारेषु शुद्धवैराग्यगोचरः को विषयो न चर्चितः ? कोऽनुपयुक्तः ? कश्च न विदुषां चेतश्चमत्कारी ? किं बहुना! श्रुतेन पठितेन चिन्तितेन चानेन प्रकरणेन मुमुक्षूणां जिज्ञासा सर्वतो विरम्यत इति स्पष्टतरमिदमेव प्रकरणं स्वाधिकारिणां प्रकटयतीत्यलं विस्तरेण।

संवत् १९६६ }<br>
भाद्रपद शुदि. १५ }

प्रसिद्धयित्री<br>
श्री जैनधर्मप्रसारक सभा.<br>
भावनगर.

श्रीउमास्वातिवाचकविरचितम्

# ॥ प्रशमरतिप्रकरणम् ॥



श्रीगौडीपार्श्वनाथाय नमो नमः । श्रीगुरुभ्यो नमः । प्रशमस्थेन येनेयं कृता वैराग्यपद्धतिः । तस्मै वाचकमुख्याय नमो भूतार्थभाषिणे ॥ १ ॥ प्रशमरतिप्रकरणारंभे मंगलाभिधानं विवक्षितप्रकरणार्थस्याप्रत्यूहेन परिसमाप्त्यर्थमित्याह च-

**नाभेयाद्याः सिद्धार्थराजसूनुचरमाश्चरमदेहाः । पंचनवदश च दशविधधर्मविधिविदो जयन्ति जिनाः १**

टीका-नाभिः कुलकरः । नाभेरपत्यं नाभेयः ऋषभनामा आदिदेवः स आद्यो येषां तीर्थकृतां ते नाभेयाद्याः । सिद्धार्थो राजा तस्य सूनुर्वर्धमानाख्यः स चरमः पश्चिमाख्यो येषां ते सिद्धार्थराजसूनुचरमाः । चरमः पश्चिमो देहो येषां ते चरमदेहाः । ततः परं संसृतेरभावादन्यशरीरग्रहणासंभवः । कर्माभावात्पञ्चेन्द्रियादिप्राणदशकाभावः । तदभावाच्च श-

---

अवचूर्णी-ॐ नमः । श्रीप्रशमरतेः-शास्त्रस्य पीठबन्धः कषायरागादिकर्मकरणार्थाः । अष्टौ च मदस्थानान्याचारो भावना धर्मः ॥ १ ॥ तदनुकथा जीवाद्या उपयोगो भावाः (वः) षड्विधद्रव्यम् । चरणं शीलांगानि च ध्यानश्रेणि समुद्घाताः ॥ २ ॥ योगनिरोधः क्रमशः शिवगमनविधानमन्तफलमस्याः । द्वाविंशत्यधिकारा मुख्या इह धर्मकथिकायाम् ॥ ३ ॥ श्रीउमास्वातिवाचकः पञ्चशतप्रकरण-प्रणेता प्रशमरतिप्रकरणं प्ररूपयन्नादौ मंगलमाह-नाभे० चरमो देहः कायश्चरमदा वा चरमभवदायिनी ईहा येषाम् ॥ १ ॥

रीराभावः । ततः सांसारिकसुखातीता एकान्तिकात्यन्तिकानतिशया निराबाधस्वाधीनमुक्तिसुखभाजः संवृत्ता इत्यर्थः । कियन्तस्ते पुनरिति संख्यां निरूपयति–पञ्चनवदश चेति, कृतद्वन्द्वसमासाः, चतुर्विंशतिरित्यर्थः । अन्ये तु पञ्चादिषु त्रिष्वपि पदेषु प्रथमाबहुवचनं विदधति । 'चः' समुच्चये । सर्वे च ते शास्तारो भव्यसत्त्वानामुपदेष्टारो धर्मस्य दशविधस्य क्षमादेर्ब्रह्मचर्यावसानस्येत्याह–'दशविधधर्मविधिविद' इति, विधिः प्रकारः क्षमादिस्तं विदन्तीति । स चोपरिष्टाद्वक्ष्यते। सेव्यः क्षान्तिमार्दवेत्यादिना विदित्वा केवलज्ञानेनोपदिशन्ति मुमुक्षुभ्यः सत्त्वेभ्यः। त एवंविधा जयन्ति सर्वानन्यतीर्थकृतोऽभिभूय त एव जयन्ति नान्ये उपायाभावात् । यथाहाचार्यसिद्धसेनः–"अन्येऽपि मोहविजयाय निपीड्य कक्षामभ्युत्थितास्त्वयि विरूढसमानमानाः।अप्राप्य ते तव गतिं कृपणावसानास्त्वामेव वीर शरणं ययुरुद्वहन्तः॥१॥"(द्वा०१काव्य १०) केपुनस्ते नाभेयाद्याः सिद्धार्थराजसूनुचरमा इत्याह–'जिना' इति, रागद्वेषजेतारो जिनाः । रागद्वेषौ वक्ष्यमाणौ मोहनीयप्रकृतेर्भेदौ । तद्ग्रहणाच्च सकलमोहप्रकृतिभेदग्रहणं, तज्जये च ज्ञानदर्शनावरणान्तरायाणि क्षयमुपयान्तीत्यतो घातिकर्मचतुष्टयक्षयात् केवलज्ञानभास्कराविर्भावः । इतो रागद्वेषजयग्रहणं सूचनमात्रमिति ॥ १ ॥

भरतक्षेत्रसंभूततीर्थकृच्चतुर्विंशतेः प्रकरणकारो नमस्यां विधाय सांप्रतं समस्तकर्मभूमिवर्तिनो जिनादीन् प्रणिधित्सुराह–

**जिनसिद्धाचार्योपाध्यायान् प्रणिपत्य सर्वसाधूंश्च। प्रशमरतिस्थैर्यार्थं वक्ष्ये जिनशासनात् किञ्चित् ॥२॥**

टीका–पूर्वोक्तलक्षणा जिनास्तीर्थकृतः सामान्यकेवलिनो वा । सिद्धास्तु निष्ठितसकलप्रयोजनाः सर्वकर्मविनिर्मोक्षाल्लो-

---

अवचूर्णी–महाविदेहादिभवान् । 'चः' समुच्चये । जिनागमात् किञ्चिदन्यत् प्रशमरतिप्रकरणमित्यर्थः ॥ २ ॥

कशिखराध्यासिनः स्वाधीनसुखाः साद्यपर्यवसानाः । पञ्चविधाचारस्थास्तदुपदेशदानाद्वा आचार्याः पारमार्थप्रवचनार्थ-प्ररूपणे निपुणाः । उपेत्य उपगम्य यतोऽधीयन्ते शिष्या इत्युपाध्यायाः सकलदोषरहितसूत्रसंप्रदाः । अत्र द्वन्द्वसमासस्तान् । ज्ञानदर्शनचारित्रलक्षणाभिः पौरुषेयीभिः शक्तिभिर्मोक्षं साधयन्तीति साधवः । सर्वग्रहणाद्येऽप्यद्य प्रतिपन्नाः समस्तसावद्ययोगविरतिलक्षणं सामायिकं तेऽपि प्रणिपातार्हा इति दर्शयति । अथवा सर्वशब्दः सर्वान् पञ्चापेक्षते मध्यवर्तित्वात् । सर्वान् जिनान् सर्वान् सिद्धान् सर्वानाचार्यान् सर्वोपाध्यायान् सर्वसाधूंश्च प्रणिपत्येति प्रत्येकमभिसंबन्धः । एवमिष्टदेवतोद्देशेनाभिहितः प्रणिपातः । तदनन्तरमाराद्उपकारित्वादाचार्यादीनपि प्रणम्यान्वर्थसंज्ञायुक्तप्रकरणक्रियां प्रतिजानीते प्रतिविशिष्टप्रयोजनं च दर्शयति कारिकार्धेन—'प्रशमरतिस्थैर्यार्थमिति' अरक्तद्विष्टता प्रशमो वैराग्यमिति । वक्ष्यति उपरि माध्यस्थ्यं वैराग्यमित्यत्र । तत्र वैराग्यलक्षणे प्रशमे रतिः शक्तिः प्रीतिस्तस्यां निश्चलता प्रशमरतिस्थैर्यं । अर्थशब्दः प्रयोजनवचनः । प्रशमरतौ कथं नाम स्थिरो मुमुक्षुर्भव्यः स्यादित्यतो वक्ष्ये प्रकरणं । तच्च जिनशासनादेव वक्ष्यामि अन्यत्र प्रशमाभावात् । यतः सर्वाश्रवनिरोधैकरसं हि जैनं शासनं । न चान्यदेवंविधमस्ति । प्रशमकारि प्रवचनं शासनं द्वादशांगमाचारादिदृष्टिवादपर्यन्तं । तच्च रत्नाकरवदनेकाश्चर्यनिधानं । तस्मात् किञ्चित् मनाक् वक्ष्ये । समस्ताभिधाने यद्यपि शक्तिर्नास्ति, तथापि ग्रहणधारणार्थावधारणपरिदुर्बलानां भव्यानां स्वल्पोऽपि प्रशमामृतबिन्दुर्हृदयेषु पातितो महान्तमुपकारं प्रसूते । उपकर्तुश्च भव्योपकारः स्वपरहितप्रतिविशिष्टफलदायी जायत इति तदाह—वक्ष्ये जिनशासनात् किञ्चित् ॥ २ ॥

वक्ष्ये इत्युक्तं, अबहुश्रुतानां तु सकष्टस्तत्र प्रवेश इति आर्याद्वयेनाह—

**यद्यप्यनन्तगमपर्ययार्थहेतुनयशब्दरत्नाढ्यम् । सर्वज्ञशासनपुरं प्रवेष्टुमबहुश्रुतैर्दुःखम् ॥ ३ ॥**

टीका—यद्यप्यबहुश्रुतेनास्मद्विधेन सर्वज्ञशासनपुरप्रवेशाभावादेव । तद्धि परमदुर्गदुरवगाहम-समस्ताभिधानमशक्यं । यद्यप्यबहुश्रुतेनास्मद्विधेन सर्वज्ञशासनपुरप्रवेशाभावादेव । अर्थो ह्यनन्तैर्गमैः पर्ययैश्च यस्य सर्वज्ञशासनपु-नन्तगमपर्यायार्थत्वात् । तथा चोक्तं—"अणंतगमपज्जवं सुत्तमिति" । सूत्रपदस्यैकस्यार्था रस्य तदनन्तगमपर्ययार्थं । गमाः स्यादस्ति स्यान्नास्तीति सप्तविकल्पाः । पर्ययास्तु प्रकृतवस्त्वपेक्षाः । बहवः । हेतुः कारणमात्रमन्वयव्यतिरेकवान् वा । अनेकरूपज्ञेयालंबना अध्यवसायविशेषा नैगमसंग्रहादयो नयाः, हस्ति-दर्शनेऽन्धानामध्यवसायवत् उत्तरोत्तरसूक्ष्मदर्शनात् । शब्दप्राभृताभिहितलक्षणाः साधुशब्दाः प्राकृताः संस्कृताश्च । शब्दप्राभृतं च पूर्वान्तःपाति । यत इदं प्राकृतव्याकरणं संस्कृतव्याकरणं चाकृष्टं । अनन्तगमपर्यायार्थहेतुनयशब्दा एव रत्नानि व्याख्यातुर्गिरां मंडनानि भूषणानि, एभिराढ्यं ऋद्धिमत् । आढ्यशब्दः प्रभूतवचनोऽनन्तशब्दो वा सर्वत्राभिसं-बध्यते, अर्थस्यानन्त्याद्धेतवो नयाः शब्दाश्चानन्ताः । तथा चाढ्यशब्द आकुलवचनस्तैराढ्यमाकुलं गहनमिति । तदेवं-

---

अवचूर्णी—अनन्तानि बहूनि अक्षयाणि वा गमा मार्गाः सदृशपाठाश्च । पर्यायाः क्रियाध्यवसायरूपा भेदाः क्रमपरिवर्तिनश्च घटादि-शब्दानां कुटादिनामान्तराणि वा । अर्थाः शब्दानामभिधेयानि द्रव्यगणितादयश्च धर्मास्तिकायादयो वा । हेतवोऽपूर्वार्थोपार्जनोपायाः अन्य-थाऽनुपपत्तिलक्षणाश्च । नयाः प्राप्तार्थरक्षणोपाया नैगमादयः । शब्दाश्चित्रभाषादयः संस्कृतप्राकृतादयश्च । रत्नानि आमर्षौषध्यादयश्च ॥ ३ ॥

विधं सर्वज्ञशासनपुरं प्रवेष्टुमन्तर्निपत्य ज्ञातुमबहुश्रुतैरनधिगतसकलपूर्वार्थैर्दुःखमशक्यमेव वर्तत इति शेषः प्रवेष्टुमित्यर्थः ॥३॥

यद्यपीत्यपेक्ष्यमाण इदमाह—

**श्रुतबुद्धिविभवपरिहीणकस्तथाप्यहमशक्तिमविचिन्त्य। द्रमक इवावयवोञ्छकमन्वेष्टुं तत्प्रवेशेप्सुः ॥४॥**

टीका—श्रुतबुद्धिविभवपरिहीणोऽपि अधिगतसकलपूर्वार्थताविभवस्तेन परिहीणः परित्यक्तः । तथा बुद्धिविभवपरिहीणकश्च बुद्धेर्विभवः कोष्ठबुद्धित्वं बीजबुद्धित्वं पदानुसारित्वमित्यादि । अहमित्यात्मानं निर्दिशति प्रकरणकारः । अशक्तिमात्मगतामविचिन्त्यानपेक्ष्यानादृत्यात्मनोऽसामर्थ्यं । सोऽहं समुद्यतः कर्तुं द्रमक इव द्रमको निःस्वो रंकः । स हि देवताबलिसिक्थान्यप्युच्चित्योच्चित्य विप्रकीर्णानि पोषमात्मनः करोति । लूनकेदारिक इव व्रीहिकणान् भुवि निपतितानुच्चित्य शरीरस्थितिं विधत्ते । तेषां विप्रकीर्णानां संचयनमुञ्छमेवोञ्छकं, एवमहमपि पूर्वपुरुषसिंहैर्मतिभिराकृष्यमाणे प्रवचनार्थेऽनेकशो यदवयवजातमाकर्षतां शटितं किञ्चित्तदन्वेष्टुं गवेषयितुं सर्वज्ञशासनपुरं प्रवेष्टुमिच्छामि । परिशटितावयवोच्चयनमात्रकेण सर्वज्ञशासनपुरप्रवेशमाप्तुमिच्छामीत्यर्थः । आर्याद्वयस्योपनयो यथा—यद्वद्ध्लाढ्यपुरमन्तः (स्यान्तः) प्रवेष्टुमविभवैः सकष्टं तद्वत् सर्वज्ञशासनमवबोद्धुं सकष्टं वर्तत इत्यर्थः ॥ ४ ॥

---

अव०—श्रुतमागमो बुद्धिरौत्पत्त्यादिका (रौत्पातिक्यादिका) मतिस्त एव विभवो धनं तेन परिहीणकः । अवयवानामर्थप्राधान्यानामुञ्छको मीलनं गवेषयितुं सर्वज्ञपुरप्रवेशमिच्छुः ॥ ४ ॥

तामेवोञ्छवृत्तितामात्मनो दर्शयति कारिकाद्वयेन—

**यद्बहुभिर्जिनवचनार्णवपारगतैः कविवृषैर्महामतिभिः। पूर्वमनेकाः प्रथिताः प्रशमजननशास्त्रपद्धतयः॥५॥**

टीका—जिनवचनमर्णव इव पारगमनाशक्यत्वान्मन्दमतिभिः। महामतिभिस्तु बुद्धिविभवप्राप्तैः सुगमपार इति तद्-
र्शयति—जिनवचनार्णवपारगतैर्बहुभिर्महामतिभिश्चतुर्दशपूर्वविद्भिः शास्त्रप्रतिबद्धकाव्यकरणनिपुणैः सत्कविभिः शब्दार्थ-
दोषरहितकाव्यकारिभिः कविवृषैः कविप्रधानैः मत्तः पूर्वं प्रथमतरमेवानेका बह्व्यः प्रशमजननशास्त्रपद्धतयः प्रथिताः
प्रकाशिताः। प्रशमो वैराग्यं स जन्यते येन शास्त्रेण तत्प्रशमजननशास्त्रं तस्य पद्धतयो रचना वैराग्यवीथ्य इत्यर्थः।
तैर्महामतिभिर्या विरचिताः शास्त्रपद्धतयः ॥ ५ ॥

द्वितीयकारिकां वक्ति—

**ताभ्यो विसृताः श्रुतवाक्पुलाकिकाः प्रवचनाश्रिताः काश्चित्। पारंपर्यादुत्सेषिकाः कृपणकेन संहृत्य॥६॥**

टीका—ताभ्यो विसृता विनिर्गताः। श्रुतग्रन्थानुसारिण्यो वाचः प्रधानार्थप्रतिबद्धा या विप्लु(प्रु)ष इव पुलाकिकाः पलं-
जीरूपा निःसारा याः शटिताः प्रधानार्थाः। प्रवचनानुसारिण्यो द्वादशांगार्थानुगताः। तत्रापि काश्चिदेव न सर्वाः संप्रा-

---

अव०—चतुर्दशपूर्वविद्भिः या इति संबन्धो योज्यः। प्रथिताः प्रकाशिताः ॥ ५ ॥ —विनिर्गताः श्रुतग्रन्थानुसारिण्यो वाचो
विप्रुष इव परिशाटिप्रायाः आगमवचनप्राधान्यावयवभूताः कृपणेनेव संपिण्ड्य उत्सेपिकाः परिशाटिताः ॥ ६ ॥

विताः । पारंपर्याद्भुत्सेपिका इति गणधरशिष्यैश्चतुर्दशादिपूर्वधरैरेकादशांगविद्भिश्च प्रवचनान्यवहारं कुर्वद्भिरुत्सेपिकाः परिशाटीप्रायाः कृताः । कृपणकेन रंकेण इव संहृत्य संपिण्ड्य ॥ ६ ॥

किं कृतमित्याह—

**तद्भक्तिवलार्पितया मयाप्यविमलाल्पया स्वमतिशक्त्या। प्रशमेष्टतयानुसृता विरागमार्गैकपदिकेयम्॥७॥**

टीका—यैस्ताः श्रुतवाक्पुलाकिका विसृता मुक्तास्तेपु भक्तिः प्रीतिः सेवा। तासु वा श्रुतवाक्पुलाकिकासु भक्तिस्तावन्मात्रेणैव परितोपात्तद्भक्तेर्वलं सामर्थ्यं । तेन तद्भक्तिवलेनार्पिता उपनीता स्वमतिशक्तिः विशेष्यात्तद्भक्तिरेव वलात्प्रोत्साहयति । मे स्वमतिशक्तिं जनयति वा । तया तद्भक्तिवलार्पितया स्वमतिशक्त्या । मयापि तदुक्त्यनुसारेण प्रथिता । पुनस्तस्या एव विशेपणं अविमलाल्पयेति ज्ञानावरणकर्मकलुपितत्वादविमला अल्पा स्तोका । यतश्चतुर्दशपूर्वधरा अपि पट्स्थानपतिता भवन्ति किं पुनरस्मदादयः । कः पुनरयं नियोगोऽवश्यंतया प्रकरणं कर्तव्यमित्याह—प्रशमेष्टतया इष्टस्य भाव इष्टता, प्रशमस्येष्टता प्रशमवल्लभता, तया हेतुभूतया विरागमार्ग एव एकं पदं यस्या विरागपथं स्थानमाश्रयो यस्याः सेयं विरागमार्गैकपदिका कृतेति ॥ ७ ॥

---

अव०—श्रुतवाक्पुलाकिकाबहुमानसामर्थ्यढौकितया कलुपतुच्छया प्रशमस्पृहकत्वेनानुसृता कृता, विरागमार्गोत्पादिका विरागपथः पदं स्थानं यस्या वा ॥ ७ ॥

ननु चोद्दिष्टाः श्रुतवाक्पुलाकिकाः परिगृह्य या रचिता कथं सा सतां संमता भविष्यतीत्याह—

**यद्यप्यवगीतार्था न वा कठोरप्रकृष्टभावार्था । सद्भिस्तथापि मय्यनुकंपैकरसैरनुग्राह्या ॥ ७ ॥**

टीका—अवगीतोऽनादृतः परिभूतोऽर्थो यस्याः सावगीतार्था । यद्यपि कथं पुनरवगीतार्थत्वमाशंकते । यतो न वा कठोरप्रकृष्टभावार्था वाशब्दोऽवधारणार्थः । न च कठोर आक्षेपपरिहारपरिशुद्धः प्रकृष्टो वाचकैः शब्दैः प्रतिपाद्यो नातः परमन्योऽर्थोऽस्तीति सकलकारककलापसाध्यः प्रकर्षभावापन्नोऽर्थो नैव यस्यां । सद्भिस्तथापि सुजनैर्गुणदोषविद्भिः । मय्य-नुकंपैकरसैरनुग्राह्या । मयीत्युत्सेपिकामात्रसंघट्टनशीले कृपणके द्रमकभूतेऽनुकंपार्हे । अनुकंपैवैको रसः स्वभावो येषां सज्ज-नानां तैः अनुकंपैकरसैः । इयमनुग्रहीतव्या अनुग्रहार्हेत्यर्थः। सन्तो हि करुणापात्रमवलोक्यावश्यंतयानुग्रहं कुर्वन्तीति ॥७॥

अयमेव स्वभावः सज्जनानामिति दर्शयन्नाह—

**कोऽत्र निमित्तं वक्ष्यति निसर्गमतिसुनिपुणोऽपि वा ह्यन्यत् । दोषमलिनेऽपि सन्तो यद्गुणसारग्रहणदक्षाः ॥**

टीका—निसर्गः स्वभावः । स्वाभाविकी मतिः सहजा निःकृत्रिमा सा किलामोघा भवति । तया मत्या सुष्ठु निपुणोऽपि ॥ ८ ॥ अत्र सतां सौजन्यवि-

---

अव०—अवगीतोऽनादरणीयोऽर्थो यस्याः सा । न वा निषेधे गंभीरप्रधानभावार्था अंगीकर्तव्या । निसर्गः स्वभावतया सुष्ठु निपुणोऽपि—

षये कारणं सत्स्वभावादन्यत् कोऽपि किं वक्ष्यति अपि तु नेति । वा तस्मादर्थे । हिः यस्मादर्थे ।

इति भणति कः तेनामत्सरिणा स्वभावेन कृता ॥ ९ ॥

कुशलोऽपि कः खल्वत्र सतां सौजन्ये निमित्तं कारणमन्यद्वक्ष्यति, स्वभावादृते। न खलु मालतीपुष्पाणामाधेयः सुरभिगन्धः केनापि, स्वभावजत्वात्। हिशब्दो यस्मादर्थे। वाशब्दस्तस्मादर्थे। यस्मात् सुनिपुणोऽपि स्वभावमन्तरेण नान्यन्निमित्तं वर्णयितुं समर्थः तस्मात् स्वभाव एवायं सतां परगुणोत्कीर्तनं दोषाभिधाने च मूकत्वमिति पश्चार्धेन दर्शयति—दोषमलिनेऽपि दोषयुक्तेऽपि परकीयवचसि गुणान् सारभूतान् गृह्णते सन्तः परगुणग्रहणनिपुणाः। जानाम्येवाहं पूर्वपुरुषोत्सेपिकाः पुलाकिकाः समुच्चित्य रचितेयं विरागमार्गपदिका, अतो न सम्मता विदुषाम् ॥ ९ ॥

तथापि—

**सद्भिः सुपरिगृहीतं यत् किंचिदपि प्रकाशतां याति। मलिनोऽपि यथा हरिणः प्रकाशते पूर्णचन्द्रस्थः १०**

टीका—सन्तः सुजनास्तैः। सुपरिगृहीतमादरेण प्रतिपन्नं। यत्किंचिदपि दोषवदपि निःसारमपि वा। प्रकाशतां याति लोके प्रथते। विदुषां सुजनानां सम्मतमेतदिति परिगृहीतगुणेन प्रख्यातिमेति विद्वत्समाजेष्विति तद्दर्शयति—मलिनोऽपीत्यादिना। चन्द्रमण्डलमध्यवर्ती कुरंगः कृष्णिमानमपि बिंबं प्रकाशते शोभते पूर्णचन्द्रस्थः। आश्रयगुणो ह्ययं यन्मलिनोऽपि हरिणो भ्राजते। एवं यदेव सद्भिः परिगृह्यते निस्सारमपि तत्सदाश्रयादेव भ्राजत इति ॥ १० ॥

---

अव०—प्रकाशतां प्रकटतां। कृष्णिमानमपि बिभ्रत् शोभते निःसारं यत्किंचित् ॥ १० ॥

तथान्यदप्यमुष्मिन्नेव सुजनव्यतिकरे प्रकरणकारमुदाहरति—

**बालस्य यथा वचनं काहलमपि शोभते पितृसकाशे। तद्वत्सज्जनमध्ये प्रलपितमपि सिद्धिमुपयाति ॥११॥**

टीका—बालः शिशुरनभिव्यक्तवर्णवचनः। तद्वचनं काहलमृजु स्खलदक्षरगद्गदं पितुः समीपे विराजते, परितोषजनकत्वात् कौतुकमाधत्ते। पुनः पुनश्च तदेवानुबध्नाति पिता। तद्वदिति बालकाहलवचनवत्। सज्जनानां मध्ये प्रलपितमसंबद्धमपि प्रसिद्धिं प्रख्यातिमुपयातीति ॥ ११ ॥

अत्राह परः—यदि पूर्वमनेकाः प्रथिताः प्रशमजननशास्त्रपद्धतयो महामतिभिस्तत्कोऽयं प्रशमरतिप्रकरणकरणे पुनरादरः। ता एवाभ्यसनीयाः प्रशमकांक्षिणा। उच्यते—

**ये तीर्थकृत्प्रणीता भावास्तदनन्तरैश्च परिकथिताः। तेषां बहुशोऽप्यनुकीर्तनं भवति पुष्टिकरमेव ॥१२॥**

टीका—प्रागर्थतस्तीर्थकरैः प्रणीताः। तदनन्तरा गणधराः साक्षाच्छिष्या भगवतां तैश्च सूत्रप्रतिबन्धेन परिकथिताः। भूयस्तदनन्तरैर्गणधरशिष्यैस्तच्छिष्यैश्च पारंपर्येणाख्याता भावा इति जीवादयः पदार्था लक्षणविधानानुयोगद्वारप्रक्रमेण प्ररूपितास्तेषां भावानां बहुशोऽनेकशः पश्चात् कीर्तनमनुकीर्तनं मनोवाक्कायैर्बन्धमोक्षप्रक्रियानुग्रहण(ग्राहक)तया पुष्टिकरमेव

---

अव०—काहलमपि अव्यक्ताक्षरं असंबद्धं प्रलपितमपि अनर्थकवचनमपि प्रख्यातिम् ॥ ११ ॥ गणधरादिभिस्तेषां ज्ञानादीनां भावानां पश्चात्कीर्तनमनुकीर्तनम् ॥ १२ ॥

जवति । पुष्टिरुपचयो ज्ञानदर्शनचारित्राणां । तदुपचयाच्च कर्मनिर्जरणं । ततो मोक्ष इति नास्ति कश्चिद्दोषः ॥ १२ ॥

पुनरुक्तदोषोऽपि न ढौकते प्रकारान्तरेण वैराग्याभ्यासादारोग्यार्थिनो भैषजोपयोगवदित्याह–

**यद्वदुपयुक्तपूर्वमपि भैषजं सेव्यतेऽर्त्तिनाशाय । तद्वद्रागार्त्तिहरं बहुशोऽप्यनुयोज्यमर्थपदम् ॥ १३ ॥**

टीका–लब्धप्रत्ययमुपयुक्तमौषधं प्रथमं पुनः पुनस्तदेवोपयुञ्जते । तदुपयोगाच्चाभ्यासतः प्रतिदिनं व्याधेरुपशमप्रकर्षविशेषसमासादनं दृष्टं । व्याधिकृतं दुःखं अर्त्तिर्वेदना । उपयुक्तपूर्वमपीत्यनेन लब्धप्रत्ययत्वमाचष्टे । तद्वत्तथा रागार्त्तिहरं । रागग्रहणं द्वेषादीन् पिशुनयति । रागद्वेषोपात्तकर्मोदयप्रसूतायास्तीव्रादिवेदनार्तेरपहारकारि पुनः पुनरभ्यस्यमानमप्यदुष्टमेवार्थप्रधानं पदमदोषमनुयोज्यमनुयोजनीयं वाक्प्रपञ्चेनानेकश इति ॥ १३ ॥

तथा च–

**यद्वद्विषघातार्थं मंत्रपदे न पुनरुक्तदोषोऽस्ति । तद्वद्रागविषघ्नं पुनरुक्तमदुष्टमर्थपदम् ॥ १४ ॥**

टीका–वृश्चिकादिदष्टानामपमार्जनं कुर्वंतो मंत्रवादिनस्तद्विषजनितवेदनाविघातं विधित्सन्तः पुनः पुनस्तान्येव मंत्रपदान्यावर्तयन्ति । दृष्टश्च प्रतिक्षणं विघातः । तद्वद्रागविषघ्नं वैराग्याग्निसन्धुक्षणप्रवणमनेकशोऽभ्यस्यमानं रागद्वेषविघातित्वात् न पुनरुक्तदोषमासजतीति ॥ १४ ॥

---

अव०–पूर्वसेवितमपि पुनः पुनः सेव्यते अनुयोजनीयं वाक्प्रबन्धेन ॥ १३ ॥ अर्थाभिधायि पदं शास्त्रम् ॥ १४ ॥

तथापरमप्युदाहरत्यस्मिन्नेवार्थे—

**वृत्यर्थं कर्म यथा तदेव लोकः पुनः पुनः कुरुते । एवं विरागवार्ताहेतुरपि पुनः पुनश्चिन्त्यः ॥ १५ ॥**

टीका—वर्तनं वृत्तिरात्मनः कुटुंबस्य वा पोषणं तदर्थं। कृष्यादिकं कर्म। करोति लोकः समुचितधनधान्योऽपि प्रतिवर्षं महतीं संपदमिच्छन् प्रकर्षवर्ती । एवं विरागवार्ता । वृत्तिरस्यां विद्यत इति वार्ता । वैराग्यवृत्तिर्वैराग्ये वर्तनं । तस्यां विरागवार्तायां यो हेतुः कारणं स पुनः पुनश्चिन्त्योऽभ्यसनीयः । स च हेतुः वैराग्यप्रख्यापकानि शास्त्राणि यान्यालोच्यालोच्य प्रतिक्षणं परित्यज्य रागादीन् वैराग्यमेवालम्बत इति ॥ १५ ॥

तच्च वैराग्यमविच्छेदेन यथा न त्रुट्यत्यन्तराल एव तथानुष्ठेयमित्याह—

**दृढतामुपैति वैराग्यभावना येन येन भावेन । तस्मिंस्तस्मिन् कार्यः कायमनोवाग्भिरभ्यासः ॥ १६ ॥**

टीका—वैराग्यवासना प्रतिदिनं येन येन भावेन जन्मजरामरणशरीराद्युत्तरकारणालोचनादिना न विच्छिद्यते दृढतामेवोपैति । तत्र तत्राभ्यासः कार्यः । कायमनोवाग्भिः । अथवा येन येन भावेनेति मनःपरिणामेनात्यर्थं निर्वेदसंवेगरूपेण भाव्यमानेन दृढीभवति वैराग्यं । तत्र विधेयोऽभ्यास इति ॥ १६ ॥

---

अव०—आजीवनाकृते कर्म कृष्यादि हेतुः कारणं अभ्यसनीयः ॥ १५ ॥

सुखावबोधग्रन्थरचनार्थं वैराग्यार्थवाचिनः पर्यायशब्दानाचष्टे—

**माध्यस्थ्यं वैराग्यं विरागता शान्तिरुपशमः प्रशमः। दोषक्षयः कषायविजयश्च वैराग्यपर्यायाः ॥१७॥**

टीका—अरागद्वेषवृत्तिर्मध्यस्थस्तस्य भावः कर्म वा माध्यस्थ्यं। विगतरागद्वेषता वैराग्यं। विगतरागो विरागस्तद्भावो विरागता। शमः शान्तिस्तेषामेव रागादीनामनुदयाद्यवस्था। वैराग्यस्य सामीप्येन शम उपशमः। प्रकृष्टः शमो रागादीनामेव प्रशमः। दूषयन्तीति दोषाः अपूर्वकर्मोपादानेन जीवं कलुषयन्ति त एव रागादयस्तेषां क्षय आत्यन्तिक उच्छेदः। कष्यन्तेऽस्मिन् जीवा इति कषः संसारस्तस्य आया उपादानकारणानीति कषायास्तेषां विजयोऽभिभवो निराकरणमेवमेते सर्व एव वैराग्यपर्यायाः कथिताः ॥ १७ ॥

विगतो रागश्च विरागः। कः पुनरयं रागो नाम। तमपि पर्यायद्वारेणाचष्टे—

**इच्छा मूर्छा कामः स्नेहो गार्ध्यं ममत्वमभिनन्दः। अभिलाष इत्यनेकानि रागपर्यायवचनानि ॥ १८ ॥**

टीका—इच्छा प्रीती रमणीयेषु योषिदादिष्वात्मपरिणामः। मूर्छा बाह्यवस्तुभिः सहैकीभवनाध्यवसायलक्षणपरिणामः। कामः प्रार्थनाविशेषः इष्टस्य वस्तुनः। स्नेहः प्रतिविशिष्टप्रेमादिलक्षणः। गृद्धता गार्ध्यमभिकांक्षाऽप्राप्तविषया। ममेदं

---

अव०—बाह्यवस्तुभिः सहैकीभावेनाध्यवसायः इष्टप्राप्तौ तोषः ॥ १८ ॥

वस्तु, अहमस्य स्वामीति चित्तपरिणामो ममत्वं। इष्टवस्तुप्राप्तौ परितोषोऽभिनन्दः। अभिलषणमभिलाष इष्टप्राप्त्यर्थं मनोरथः। एवमेभिः पर्यायशब्दैर्योऽर्थोऽभिधीयते स रागः॥ १८॥

दोषक्षयो वैराग्यमित्युक्तं। तत्र पर्यायकथनेन दोषं निरूपयति—

**ईर्ष्या रोषो दोषो द्वेषः परिवादमत्सरासूयाः। वैरप्रचण्डनाद्या नैके द्वेषस्य पर्यायाः ॥ १९ ॥**

टीका—परविभवादिदर्शनाच्चित्तपरिणामो जायते। वियुज्यतामेष एतेन विभवेन ममैवास्तु विभवोऽन्यस्य मा भूदितीर्ष्या। तथा सौभाग्यरूपलोकप्रियत्वादिविषयबाध्यो रोषः क्रोधः। दूषयतीति दोषः। अप्रीतिलक्षणो द्वेषः। परदोषोत्कीर्तनं परिवादः। मां गदयति भ्रमयति सद्धर्मादिति मत्सरः। असूया त्वक्षमा। परस्परवधादिजनितकोपसमुत्थं वैरम्। प्रकृष्टं चण्डनं प्रकोपः शान्तस्यापि कोपाग्नेः सन्धुक्षणं। एवमाद्या बहवोऽन्येऽपि द्वेषपर्यायाः॥ १९॥

काः पुनः क्रियाः कुर्वन्नयमात्मा रागद्वेषवशगो भवतीति कारिकात्रयेण कुलकमाह—

**रागद्वेषपरिगतो मिथ्यात्वोपहतकलुषया दृष्ट्या। पञ्चाश्रवमलबहुलार्तरौद्रतीव्राभिसन्धानः ॥ २० ॥**

टीका—पर्यायद्वारेणोक्तौ रागद्वेषौ ताभ्यां परिगतस्तादृशपरिणामयुक्तः। मिथ्यात्वं तत्त्वार्थाश्रद्धानमभिगृहीतानभि-

---

अव०—मिथ्यात्वोपहतया कलुषया दृष्ट्या विपरीतया युक्तः मल उपचितकर्मराशिः पञ्चाश्रवमलबहुलश्च अभिसन्धानं तीव्राध्यवसायः २०

गृहीतसन्देहभेदात्त्रिविधं । अभिगृहीतं त्रयाणां त्रिषष्ट्यधिकानां पाखंडिशतानां । अनभिगृहीतमप्रतिपन्नदेवतापाखंडरूपं । सन्दिग्धमेकस्याप्यक्षरस्य पदस्य वाप्यरोचनान्मिथ्यादर्शनं । तेनोपहतत्वात् कलुषा दृष्टिर्बुद्धिर्मलिनेत्यर्थः । तयेभूतया दृशा बुद्ध्या करणभूतया । पञ्चाश्रवाः पञ्चेन्द्रियाणि प्राणातिपातादीनि वा । आश्रवन्त्याददते कर्मेत्याश्रवाः । पञ्चाश्रवोपात्तकर्मणैव मलबहुल उपचितकर्मराशिः । आर्तं चतुर्धा । अमनोज्ञविषयसंप्रयोगे सति तद्वियोगैकतानो (मनोनिरोधो ध्यानं) तथासद्वेदनायाः, तथामनोज्ञविषयसंप्रयोगे तदविप्रयोगैकतानश्चित्तनिरोधः तृतीयमार्तं, चक्रवर्त्यादीनामृद्धिदर्शनान्ममाप्यमुष्य तपसः फलमेवंविधमेव स्यादन्यजन्मनीति चित्तनिरोधः चतुर्थमार्तं निदानकरणमात्रमिति । ऋतमिति दुःखं संक्लेशस्तत्र भवमार्तमिति । रुद्रः क्रूरो नृशंसस्तस्येदं रौद्रं । तदपि चतुर्धा । तत्र प्रथमं हिंसानुबन्धि । अनेनानेन चोपायेन परो वञ्च्यते कूटसाक्षिदानादिना तत्रैकतानं मनोरौद्रं द्वितीयं । तृतीयं स्तेयानुबन्धि येन येन प्रकारेण परस्वमादीयते घुर्घुरुककर्तरिकाछेदकक्षात्रखननादिना तत्रैकतानं मनोरौद्रं । धनधान्यादिविषयसंरक्षणैकतानं मनो दिवानिशि तुरीयं रौद्रं । अभिसन्धानमभिसन्धिरभिप्रायः । स चार्तरौद्रध्यानयोस्तीव्रः प्रकृष्टोऽभिसन्धिः पञ्चाश्रवमलबहुलश्चासावार्तरौद्रतीव्राभिसन्धानश्चेति ॥ २० ॥

**कार्याकार्यविनिश्चयसंक्लेशविशोधिलक्षणैर्मूढः । आहारभयपरिग्रहमैथुनसंज्ञाकलिग्रस्तः ॥ २१ ॥**

---

अव०—विनिर्णयः संक्लेशः कालुष्यं विशुद्धिर्नैर्मल्यं तयोर्लक्षणं परिज्ञानं । संज्ञा एव कलयः ॥ २१ ॥

टीका—कार्यं जीवरक्षादिकं । अकार्यं जीववधादिकं । तयोर्विनिश्चयो निर्णयः स तथा । संक्लेशः कालुष्यं । विशुद्धि-
नैर्मल्यं । तयोः क्लिष्टचित्ततानिर्मलचित्ततारूपयोर्लक्षणानि परिज्ञानानि । तथा तानि चेति समासः । तैः करणभूतैर्मूढो
मुग्धः । तथा आहारभयपरिग्रहमैथुनसंज्ञाः प्रसिद्धरूपास्ता एव कलयः कलहाः । कलिहेतुत्वात् । तैर्ग्रस्त आघ्रात इति॥

**क्लिष्टाष्टकर्मबन्धनबद्धनिकाचितगुरुर्गतिशतेषु । जन्ममरणैरजस्रं बहुविधपरिवर्तनाद्भ्रान्तः ॥ २२ ॥**

टीका—गतिशतेषु बह्वीषु गतिषु । पुनः पुनरावृत्त्या भ्रमणात् । क्लिष्टमष्टाभिः कर्मभिर्निबन्धनं तेन बद्धः । बद्धनिकाचि-
तत्वात् गुरुः । जन्मजरामरणानि तैः । अजस्रं पुनः पुनः । बहुविधपरिवर्तनमनेकाकारमतो भ्रान्तः परिवर्तनेन ॥ २२ ॥

**दुःखसहस्रनिरन्तरगुरुभाराक्रान्तकर्षितः करुणः । विषयसुखानुगततृषः कषायवक्तव्यतामेति ॥ २३ ॥**

टीका—दुःखसहस्रमिति बाहुल्यप्रतिपादनार्थं सहस्रग्रहणं । दुःखसहस्राण्येव निरन्तराण्यव्यवच्छिन्नानि नारकतिर्यङ्-
मनुष्यामरभवेषु गुरुर्भारस्तेनाक्रान्तत्वादवष्टब्धत्वात् कर्षितः कृशतां नीतो दुर्बलतां गत इतियावत् । करुणास्पदत्वात्
करुणः । तृष्यतीति तृषः पिपासितः । विषयाः शब्दादयः । तज्जनितं सुखं विषयसुखं । तदनुगतस्तत्रासक्तो विषयसुखा-
नुगतश्चासौ तृषश्चेति विषयसुखानुगततृषः । उपजातविषयसुखोऽपि पुनस्तृष्यति विशिष्टतरमभिलषतीत्यर्थः । एवं-

---

अव०—बन्धनं स्पृष्टं बन्धमात्रं दवरकबद्धसूचीकलापवत् ध्मातसूचीनां परस्परसंलुलितमिव निकाचितं कुट्टितसूचीकलापवत् निर-
न्तरं बहुविधघोलभ्रान्तः ॥ २२ ॥ कर्षितो विलिखितः कृशो दीनः अनुगत आसक्तनवनवाभिलाषः क्रोधी मानीत्यादिकथनीयताम् ॥ २३ ॥

विधो जीवः कषायाणां क्रोधादीनां वक्तव्यतामेति । क्रोधी मानी मायावी लोभवाश्चेति उक्तलक्षणः कषायशब्दः कषायैर्वक्तव्यः क्रोधादिभिरित्यर्थः ॥ २३ ॥

स पुनः कषायवक्तव्यतां गत्वा किमवाप्नोतीत्याह—

**स क्रोधमानमायालोभैरतिदुर्जयैः परामृष्टः । प्राप्नोति याननर्थान् कस्तानुद्देष्टुमपि शक्तः ॥ २४ ॥**

टीका—स खल्वेवंविधः समुपजातकषायपरिणामः । क्रोधादिभिः परामृष्टः । अतीव दुर्जयैरिति नाल्पसत्त्वैर्जेतुं शक्याः कषाया इति दुर्जयास्तैः परामृष्टः परिभूतः कषायवशंगत इत्यर्थः । प्राप्नोति याननर्थानापद्विशेषान् वधबन्धादीन् । कस्ताननर्थान् वचनमात्रेणापि नाममात्रेणापि व्याख्यातुं समर्थः । अनर्थभूयसि संसारे कियतोऽनर्थान् तान् नामग्राहं प्रतिपादयितुं शक्यं ॥ २४ ॥

यद्यपि सकलानर्थानाख्यातुमशक्यं तथापि स्थूलतरकतिपयानर्थाख्यानमपायेभ्यो भव्यांश्चोदयत्येवेत्याह—

**क्रोधात्प्रीतिविनाशं मानाद्विनयोपघातमाप्नोति । शाठ्यात्प्रत्ययहानिं सर्वगुणविनाशनं लोभात् ॥२५॥**

टीका—क्रोधनं क्रोधः आत्मनः परिणामो मोहकर्मोदयजनितस्तस्मादेवंविधात्परिणामादिहलोके एव प्रीतिव्यवच्छेदो भवतीति प्रियतमैरपि सार्कं । व्यवच्छिन्नायां च प्रीतावनिर्वृतिरात्मनः । मानो गर्वस्तंभोऽहमेव ज्ञानी दाता शूर इत्यादिक

---

अव०—वक्तुमपि शक्तः आस्तां परिहर्तुम् ॥ २४ ॥ आप्नोतीति सर्वेष्वपि पदेषु योज्यम् ॥ २५ ॥

स चोपजातगर्वपरिणामस्य विहन्यते विच्छिद्यत इति दोषः । शाठ्यपरिणामो माया तस्मात्प्रत्ययहानिः । प्रत्ययो लोकव्यवहारप्र-

आत्मपरिणामस्तस्माद्विनयोपघातमाप्नोति । विनयमूलश्च धर्मः । देवगुरुसाधुवृद्धेषु यथायोग्यं विनयः कार्यः । स चोप-
जातगर्वपरिणामस्य विहन्यते विच्छिद्यत इति दोषः । शाठ्यपरिणामो माया तस्मात्प्रत्ययहानिः । प्रत्ययो लोकव्यवहारप्र-
सिद्ध्या क्वचित्पुरुषे सत्यवादित्वं न्यासकप्रत्यर्पणं चेत्यादि तद्धानिरसत्यभाषणे शाठ्यपरिणामात् न्यासकापह्नवश्चेति ।
तृष्णा लोभपरिणाम आत्मनस्तस्माच्च सर्वगुणविनाशभाग्भवति । सर्वे च ते गुणाश्च क्षमामार्दवादयस्तान् लोभाभिभूतः
समूलकाषं कषति । आप्नोतीति मध्यवर्तिना क्रियापदेन सर्वत्राभिसंबन्धः ॥ २५ ॥

संप्रत्येकैकस्य क्रोधादेः कषायस्य व्यसनोपायं दर्शयन्नाह—

**क्रोधः परितापकरः सर्वस्योद्वेगकारकः क्रोधः । वैरानुषङ्गजनकः क्रोधः क्रोधः सुगतिहन्ता ॥ २६ ॥**

टीका—परितापो हि दाहज्वराभिभूतस्येव क्रोधिनः । (परिदाहनमस्वस्थतोद्वेगोऽभयं सर्वस्येति) सर्वस्योद्वेगेति नारकति-
र्यङ्मनुष्यदेवाख्यस्यात्मनो भयमुत्पादयति । कुतश्चिन्निमित्तादुत्पन्नो वधबन्धनाभिघातादिसन्तानो वैरं तस्यानुषङ्गोऽनु-
बन्धोऽन्वयस्तं जनयत्युत्पादयति । क्रोधः सुगतिर्मोक्षस्तां हन्ति । मुक्त्यप्रापणसामर्थ्याद्धन्तीत्युच्यते । क्रोधाविष्टाश्च
सुभूमपरशुरामादयः श्रूयन्ते दुर्गतिगामिनः पारमर्षे प्रवचने । तस्मादिहपरलोकयोरपायकारी क्रोध इति युक्तः परिहर्तुम् ॥

**श्रुतशीलविनयसंदूषणस्य धर्मार्थकामविघ्नस्य । मानस्य कोऽवकाशं मुहूर्तमपि पण्डितो दद्यात् ॥२७॥**

टीका—श्रुतमागमः । शीलं च सर्वज्ञप्रणीतागमानुसारि क्रियानुष्ठानं । उभयमप्येतद्गर्वो भृशं दूषयति । श्रुतवानप्यय-

मेवं गर्वितः । श्रुतेन तु मानत्यागः कार्य इति श्रूयते । अयं तु तेनैव मत्तो मानी जातः । नन्वेवं श्रुतवतो दूषणं कृतं ज्ञवति न श्रुतस्य । उच्यते–श्रुतमपि दूषितं ज्ञवति, श्रुतकार्याकरणात् । ज्ञानेन हि मदो निर्मथ्यते । न चासौ निर्मथित इति श्रुतमेव दूषितं ज्ञवति । अज्ञेदो वा ज्ञानज्ञानिनोरिति न दोषः । एवं शीलमपि वाच्यं । विनयरहितत्वाद्दुःशील एवायमिति । धर्मार्थकामानां विघ्नकारी मानः । धर्मस्य विनयमूलत्वाद्धर्मविघ्नकारी मानः । तदनुष्ठानशून्यत्वादर्थोपादानस्यापि प्रत्यूहकारी । यतो राजादयः सेवकस्य विनयत एवार्थेन सह योजनं कुर्वन्ति नेतरस्य । कामस्यापि संप्राप्तिर्विनयसंपन्नस्यैव ज्ञवति । कुलयोषितां वेश्यानां च चित्तानुरोधलक्षणया चेष्टया कामी सुखज्ञाग्ज्ञवतीति । एवंविधस्य गर्वस्यावकाशं ढौकनमात्मनि क्षणमात्रमपि मतिमान् को दद्यात् इति । नैव कश्चिद्गुणदोषज्ञो दद्यादित्यर्थः ॥ २७ ॥

**मायाशीलः पुरुषो यद्यपि न करोति किंचिदपराधमसर्प इवाविश्वास्यो ज्ञवति तथाप्यात्मदोषहतः ॥२८॥**

टीका–माया शाठ्यमनार्जवं तच्छीलस्तत्स्वज्ञाव आत्मा । यद्यपि न क(किं)चिदप्यपराधं करोति मायाजनितं । संज्ञावितस्य मायावित्वेन पूर्वदृष्टदोषः । संप्रति तु विरतस्तद्दोषात् । तथाप्यात्मीयेनैव दोषेणोपहतो ज्ञवति ॥ ज्ञुजङ्गवदविश्वास्यः । उद्धृतदंष्ट्रोऽपि ज्ञुजङ्गो दूरात् परिह्रियते लोकेनेति । शुकादयो मायाफलज्ञाजः श्रूयन्त एवेति ॥ २८ ॥

---

अव०–आत्मीयेनैव दोषेणोपहतो भवति ॥ २८ ॥

**सर्वविनाशाश्रयिणः सर्वव्यसनैकराजमार्गस्य। लोभस्य को मुखगतः क्षणमपि दुःखान्तरमुपेयात् ॥२९॥**

टीका–सर्वेषां विनाशानामपायानामाश्रयो लोभस्थानमुपघ्नाश्चौरपारदारिकवैरसन्तानादयः सर्वे विनाशाश्चौर्यादिनिमित्ताः । सर्वविनाशाश्रयणशीलः सर्वविनाशाश्रयी । सर्वाणि व्यसनानि स्त्रीद्यूतमद्यपानाखेटकवचनदण्डपारुष्यार्थदूषणाख्यानि । हिताद्ध्वंसयन्ति पुरुषमिति व्यसनानि । तेषामेष लोभकषाय एको राजमार्गः । सर्वाणि व्यसनानि लोभाभिभूतं योग्यमाश्रयमासाद्य विश्राम्यन्ति । राजमार्गो हि द्विजादिभिश्चाण्डालादिभिश्च सर्वैः क्षुद्यते यथा, तथा लोभ एव राजमार्गः सर्वव्यसनैः क्षुद्यते । एवंविधस्य लोभस्य मुखगतो गोचरीभूतो लोभपरिणामभाक् कः खलु दुःखान्तरं सुखं, दुःखादन्यत्सुखमुपेयादुपगच्छेदिति प्रतीतिन्यायाद्ग्राह्यं सुखमेवेति । नैव कदाचित्सुखं प्राप्नुयादित्यर्थः ॥ २९ ॥

संप्रति बहुदोषकषायार्थमुपसंहरन्नाह–

**एवं क्रोधो मानो माया लोभश्च दुःखहेतुत्वात् । सत्त्वानां भवसंसारदुर्गमार्गप्रणेतारः ॥ ३० ॥**

टीका–सर्व एवैते कषायास्तीव्रस्य प्रकर्षप्राप्तस्य नरकगत्यादिषु दुःखस्य हेतवो जनकाः कारणभूता इति । केषां दुःख-

---

अव०–सर्वेषामपायानां स्थानस्य द्यूतादिसर्वव्यसनराजमार्गस्य सर्वसंचरणपथस्य ग्रासीभूतः क्षणमपि स्तोककालमपि आस्तां प्रभूतकालं दुःखादन्यत् सुखमुपगच्छेदिति प्रतीतिः ॥ २९ ॥ भवे नरकादौ संसरणं तत्र दुर्गमार्गो विषमाध्वा तस्य प्रणेतारो नायका आदेशका एते कषायाः कारणभूतत्वात् ॥ ३० ॥

हेतवः ? सत्त्वानां प्राणिनां । दुःखहेतुत्वाच्च भवसंसारदुर्गमार्गप्रणेतारो भवन्ति । भवो नरकादिजन्म तदेव संसारः पुनः पुनर्गमनागमनाद्दुर्गो विषमो भयानकस्तस्य यो मार्गः पन्थास्तस्य प्रणेतारः प्रवर्तका नायका देशकाः । कः पुनरसौ मार्गः ? हिंसानृताद्याचरणलक्षणः ॥ ३० ॥

एषामेव कषायाणामाद्यविकल्पद्वयप्रदर्शनार्थमाह–

**ममकाराहंकारावेषां मूलं पदद्वयं भवति । रागद्वेषावित्यपि तस्यैवान्यस्तु पर्यायः ॥ ३१ ॥**

टीका–ममकारो ममत्वं ममेदमिति मायालोभकषाययोर्ग्रहणं । अहंकारो गर्वः स चाभिमानक्रोधलक्षणः । मायामपि द्रव्योपादानाय वणिजः कुर्वन्ति क्रयविक्रयादिष्वतो ममकारान्तःपातिन्येव । क्रोधो ह्यभिमानादेव क्रियते । किमित्ययं मामाक्रोशतीत्याहन्ति वा जघन्यः सन्नित्यतोऽहंकार एवैषामिति क्रोधादीनां मूलं बीजमेतदेव पदद्वयं ममकारोऽहंकार इति च । तथा च रागद्वेषावपि बीजभूतौ क्रोधादीनां द्रष्टव्यौ । तस्यैव पदद्वयस्यापरः पर्यायो ममकारो रागोऽहंकारो द्वेषः॥

अथैषां क्रोधादीनां चतुर्णां कषायाणां को रागः को वा द्वेषस्तदित्याह–

**माया लोभकषायश्चेत्येतद्रागसंज्ञितं द्वन्द्वम् । क्रोधो मानश्च पुनर्द्वेष इति समासनिर्दिष्टः ॥ ३२ ॥**

---

अव०–ममकाराहंकारयो रागद्वेषावपरपर्यायः पदद्वयस्य पर्याये बलमान्तरम् ॥ ३१ ॥ द्वन्द्वं युगलं, समासः संक्षेपः ॥ ३२ ॥

टीका—उक्तलक्षणौ मायालोभौ । तावेव द्वन्द्वं मिथुनं । रागसंज्ञितं रागनामकं । क्रोधमानौ चोक्तलक्षणावेव । एतदपि द्वन्द्वं द्वयं द्वेष इति निर्दिश्यते संक्षेपतः ॥ ३१ ॥

तौ पुनर्ममकाराहंकारौ रागद्वेषौ वा किं केवलावेव ज्ञानावरणीयादिकर्मबन्धे पर्याप्तौ अथान्यमपि कंचित्सहायमपेक्षेते इत्याह—

**मिथ्यादृष्ट्यविरमणप्रमादयोगास्तयोर्बलं दृष्टम् । तदुपगृहीतावष्टविधकर्मबन्धस्य हेतू तौ ॥ ३२ ॥**

टीका—मिथ्यादर्शनं मिथ्यादृष्टिस्तत्पूर्वमुक्तं तत्त्वार्थाश्रद्धानलक्षणं । अविरमणमविरतिरनिवृत्तिः । पापाशयाद्विषयेन्द्रियनिद्राविकथाख्यश्चतुर्विधः प्रमादः । मनोवाक्कायाख्या योगाः । एतांश्चतुरः सहायानपेक्षेते ममकाराहंकारौ रागद्वेषौ वा कर्मणि बन्धितव्ये । तयोरित्येतावेव संबध्येते । बलमित्युपकारकत्वं । उपकारका मिथ्यादर्शनादयः। तयो रागद्वेषयोः। तैश्चोपगृहीतावेतौ । मिथ्यादर्शनादिभी रागद्वेषावष्टप्रकारस्य कर्मबन्धस्य हेतुत्वं प्रतिपद्येते इति ॥ ३२ ॥

अष्टविधं बन्धमादर्शयन्नाह—

**सज्ज्ञानदर्शनावरणवेद्यमोहायुषां तथा नाम्नः । गोत्रान्तराययोश्चेति कर्मबन्धोऽष्टधा मौलः ॥ ३४ ॥**

---

अव०—मिथ्यादर्शनं तत्त्वाश्रद्धानलक्षणं, प्रमादो मद्यादिः, योगाः सत्यादयः, तन्मिथ्यात्वाविरतिप्रमादादियुतौ रागद्वेषौ ॥ ३२ ॥ मूलप्रकृतिसंबन्धीः ॥ ३४ ॥

टीका—स खलु तद्धेतुकः कर्मबन्धो ज्ञानावरणीयादिभेदेनाष्टधा भवति । ज्ञानावरणं दर्शनावरणं वेद्यं मोहनीयमायुर्नाम गोत्रमन्तरायमित्यष्टौ मूलभेदाः । क्षयोपशमजं क्षायिकं च ज्ञानमाव्रियते येन कर्मणा तज्ज्ञानावरणं । चक्षुर्दर्शनाद्याव्रियते येन कर्मणा तद्दर्शनावरणं, निद्रादिपञ्चकं च, तदपि हि दर्शनमावृणोत्येव । वेद्यं सुखानुभवलक्षणं दुःखानुभवलक्षणं च । मुह्यत्यनेन जीव इति मोहोऽनन्तानुबन्ध्यादिः । यस्य कर्मणः प्रसादाज्जीवतीत्युच्यते प्राणान् धारयति तदायुः । नाम्यन्ते प्राप्यन्ते येन गतिजात्यादिस्थानानि तन्नाम । विशिष्टकुलजात्यैश्वर्यादिप्रापणसमर्थमुच्चैर्गोत्रं । तद्विपरीतं नीचैर्गोत्रं । दानलाभादिविघ्नकारि चान्तरायमिति । मौल इति मूले भवो मौलः कर्मबन्धः ॥ ३४ ॥

यद्येष मौलोऽष्टविधोऽथोत्तरः कतिविध इत्याह—

पञ्च नव द्व्यष्टाविंशतिकश्चतुःषट्कसप्तगुणभेदः । द्विपञ्चभेद इति सप्तनवतिभेदास्तथोत्तरतः ॥ ३५ ॥

टीका—ज्ञानावरणस्योत्तरप्रकृतिभेदाः पञ्च मतिज्ञानावरणादयः । दर्शनावरणस्योत्तरप्रकृतयो नव चक्षुर्दर्शनावरणादिचतुष्टयं निद्रापञ्चकं च । वेदनीयं द्विविधं सद्वेद्यमसद्वेद्यं च । मोहोत्तरप्रकृतयोऽष्टाविंशतिः सम्यक्त्वं मिथ्यात्वं सम्यग्मिथ्यात्वं, अनन्तानुबन्धिनश्चत्वारः क्रोधादयः, अप्रत्याख्यानावरणाश्चत्वारः, प्रत्याख्यानावरणाश्चत्वारः, संज्वलनाश्चत्वारः, हास्यं रतिः अरतिः भयं शोको जुगुप्सा च । वेदः पुंस्त्रीनपुंसकवेदश्चेति । आयुषश्चतस्र उत्तरप्रकृतयो नारकायुस्तिर्यगायुर्मनुष्यायुर्देवायुरिति । षट् सप्तगुणा द्विचत्वारिंशद्भवन्ति। अतो नामकर्मण उत्तरप्रकृतयो द्विचत्वारिंशद्भवन्ति। प्रतिपदपाठात्तु श्रूयन्ते तद्यथा—गतिनाम जातिनाम शरीरनाम अंगोपांगनाम निर्माणनाम बन्धननाम संस्थाननाम संघात-

नाम संहनननाम स्पर्शनाम रसनाम वर्णनाम गन्धनाम आनुपूर्वीनाम अगुरुलघुनाम उपघातनाम पराघातनाम आतपनाम उद्योतनाम उच्छ्वासनाम विहायोगतिनाम प्रत्येकशरीरनाम साधारणशरीरनाम त्रसनाम स्थावरनाम शुभनाम अशुभनाम सुभगनाम दुर्भगनाम सुस्वरनाम दुःस्वरनाम सूक्ष्मनाम वादरनाम पर्याप्तनाम अपर्याप्तनाम स्थिरनाम अस्थिरनाम आदेयनाम अनादेयनाम यशोनाम अयशोनाम तीर्थंकरनाम चेति । गोत्रस्योत्तरप्रकृतिद्वयं उच्चैर्गोत्रं नीचैर्गोत्रं च । अन्तरायोत्तरप्रकृतयः पञ्च दानान्तरायं लाभान्तरायं भोगान्तरायं उपभोगान्तरायं वीर्यान्तरायं चेति । एवमेषामष्टानामपि कर्मणामुत्तरप्रकृतयः सप्तनवतिर्भवन्तीति । नामकर्मणः पुनश्चतुर्विधा गतिरित्यादिनामभेदेन सप्तषष्टिरुत्तरप्रकृतयो भवन्ति । शेषाणां पञ्चपञ्चाशत् । एतदुभयमेकीकृतं द्वाविंशत्युत्तरं प्रकृतिशतं भवति । तत्रापि विंशत्युत्तरप्रकृतिशतस्य बन्धः । सम्यग्मिथ्यात्वयोर्नास्ति बन्धः । मिथ्यात्वदलिकमेव विशुद्धं सत् सम्यक्त्वमुच्यते । सम्यग्मिथ्यात्वमपि दलविशुद्धं मिथ्यात्वमेवोच्यत इति ॥ ३५ ॥

**प्रकृतिरियमनेकविधा स्थित्यनुभागप्रदेशतस्तस्याः । तीव्रो मन्दो मध्य इति भवति बन्धोदयविशेषः ३६**

टीका—एवमियं प्रकृतिरनेकविधा द्वाविंशत्युत्तरशतभेदेत्यर्थः । तस्याश्च प्रकृतेः स्थित्यनुभागप्रदेशबन्धेभ्यः स्थितिबन्धानुभागबन्धप्रदेशबन्धास्तेभ्यः प्रकृतिबन्धविशेषो भवति, तीव्रो मन्दो मध्य इति वा । उदयविशेषोऽपि तीव्रादिभेदः प्रकृतीनां भवति । तीव्राशयस्तदाश्रयेषु वर्तमानस्तीव्रं प्रकृतिबन्धं करोति, मन्दाशयो मन्दं, मध्याशयो मध्यमिति । बन्धविशेषाच्चोदय

---

अव०—तस्याः प्रकृतेर्बन्धोदययोर्विशेषोऽविनाशेनावस्थितिः स्थितिः अनुभागो रसः प्रदेशो दलसंचयः ॥ ३६ ॥

इति । तत्र स्थितिबन्धो ज्ञानदर्शनावरणवेद्यान्तरायाणां त्रिंशत्सागरोपमकोटीकोट्य उत्कृष्टः । मोहस्य स्थितिबन्ध उत्कृष्टः सप्ततिसागरोपमकोटीकोट्यः । नामगोत्रयोः स्थितिबन्धो विंशतिसागरोपमकोटीकोट्यः । प्रकृष्टः स्थितिबन्ध आयुषस्त्रयस्त्रिंशत्सागरोपमानि । वेदनीयस्य जघन्या बन्धस्थितिर्द्वादशमुहूर्ता । नामगोत्रयोरष्टौ मुहूर्ता । शेषकर्मणामन्तर्मुहूर्तस्थितिः । अनुभागबन्धो विपाकाख्यः कर्मणः शुभस्याशुभस्य वा बन्धकाल एव रसविशेषं निर्वर्तयति । तस्यानुभवनं विपाकः । स यथा नामकर्मणि गत्यादिषु स्थानेषु विपच्यमानोऽनुभूयते । प्रदेशबन्धस्तु एकस्मिन्नात्मप्रदेशे ज्ञानावरणपुद्गला अनन्तास्तथा शेषकर्मणामपीति ॥ ३६ ॥

**तत्र प्रदेशबन्धो योगात्तदनुभवनं कषायवशात् । स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण ॥३७॥**

टीका—तत्र तेषु चतुर्षु बन्धभेदेषु प्रदेशबन्धस्तावत् योगात् मनोवाक्कायलक्षणाद्भवति । आत्मप्रदेशेषु ज्ञानावरणादिपुद्गलोपचयो जायते इत्यर्थः । तस्य प्रदेशबद्धस्य कर्मणोऽनुभवनं कषायवशाद्विपाक इत्यर्थः । स्थितिविशेषः पाकविशेषश्च तस्य लेश्याविशेषजनितो भवति उत्कृष्टो मध्यमो जघन्य इत्यर्थः ॥ ३७ ॥

तत्र लेश्या इति कः पदार्थः ? कति वा भवन्ति लेश्या इत्याह—

**ताः कृष्णनीलकापोततैजसीपद्मशुक्लनामानः । श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः ॥ ३८ ॥**

---

अव०—तेषु बन्धभेदेषु चतुर्षु प्रदेशबन्धो योगान्मनोवाक्कायव्यापारात् तस्य प्रदेशस्थस्य कर्मणः ॥ ३७ ॥ वर्णकानां बन्धो दृढीकरणं तस्मिन् श्लेष इव ॥ ३८ ॥

टीका–षट् लेश्यानां भेदाः । स च परिणामापेक्षः तीव्रोऽध्यवसायोऽशुभो जंबूफलबुभुक्षुषट्पुरुषदृष्टान्तादिसाध्यः । अपरे त्वाहुर्योगपरिणामो लेश्या । यस्मात्कायवाग्व्यापारोऽपि मनःपरिणामापेक्षस्तीव्र एवाशुभो भवति । अशुभशुभकर्मद्रव्यसदृशाः स्वान्तःपरिणामा जायन्ते प्राणिनां वर्णकाश्चेति । का हरितालहिंगुलिकादयः, तेषां कुड्यादौ चित्रकर्मणि स्थैर्यमापादयति श्लेषो वर्णानां बन्धे दृढीकरणं । एवमेता लेश्याः कर्मबन्धस्थितिविधात्र्यस्तीव्रपरिणामाः स्थितिं कर्मणामतिदीर्घां विदधति दुःखबहुलां कृष्णनीलकापोताख्या निकाचनावस्थास्थापनेन, तैजसीपद्मशुक्लनामानः शुभस्य कर्मबन्धस्यानुफलदाः शुभबहुलामेव कर्मस्थितिं विदधति महतां विशुद्धा विशुद्धतमाश्चोत्तरोत्तरा भवन्तीति ॥ ३८ ॥

तस्मिन् पुनः कर्मणि बद्धे आत्मसात्कृते किं भवतीत्याह–

**कर्मोदयाद्भवगतिर्भवगतिमूला शरीरनिर्वृत्तिः । देहादिन्द्रियविषया विषयनिमित्ते च सुखदुःखे॥३९॥**

टीका–उदिते विपाकप्राप्ते तस्मिन् कर्मणि । भवो नरकादिगतयस्तत्रोत्पत्तौ भवगतौ सत्यां नरकादिशरीरनिर्वृत्तिः । भवगतिर्मूलं बीजं यस्याः सा भवगतिमूला शरीरनिर्वृत्तिर्देहनिर्वृत्तिश्च स्पर्शनादीन्द्रियनिर्वृत्तिः । ततः स्पर्शनादिविषयग्रहणशक्तिः । ततश्चेष्टविषयनिमित्तः सुखानुभवोऽनिष्टविषयनिमित्तश्च दुःखानुभवः ॥ ३९ ॥

---

अव०–न गतिर्भवगतिर्मूलं बीजं यस्या इन्द्रियविषया निवृत्तिः ॥ ३९ ॥

अत्र च स्वभावादेव सर्वः प्राणी सुखमभिलषति दुःखाच्चोद्विजते । मोहान्धो गुणदोषानविचार्य सुखसाधनाय यतमानो यां यां क्रियामारभते सा सास्य दुःखहेतुर्भवतीति दर्शयति—

**दुःखद्विट् सुखलिप्सुर्मोहान्धत्वाददृष्टगुणदोषः । यां यां करोति चेष्टां तया तया दुःखमादत्ते ॥४०॥**

टीका—दुःखं द्वेष्टीति दुःखद्विट् । सुखं लिप्सते तच्छीलश्च सुखलिप्सुः । मोहोऽष्टाविंशतिभेदः । तेनान्धो न गुणं दोषं वा पश्यति । चेष्टा कायिकी वाचिकी मानसी वा क्रिया । तेन तादृशा या क्रियते क्रिया, तया तया दुःखमादत्ते दुःखमनुभवति । कर्मैव वा दुःखं, कारणे कार्योपचारात्तदादत्ते, दुःखकारणं कर्म बध्नातीत्यर्थः ॥ ४० ॥

तत्र पञ्चस्विन्द्रियार्थेषु एकैकविषयप्रवृत्तावपि प्रत्यपायान् पञ्चभिर्दृष्टान्तैर्दर्शयति—

**कलरिभितमधुरगान्धर्वतूर्ययोषिद्विभूषणरवाद्यैः । श्रोत्रावबद्धहृदयो हरिण इव विनाशमुपयाति ४१**

टीका—कला अस्मिन् विद्यन्त इति कलं मात्रायुक्तं ग्रामरागरीत्या युक्तं । रिभितं मधुरं श्रोत्रसुखं । गान्धर्वविशेषणान्येतानि । तूर्यं वादित्रविशेषस्तस्य ध्वनिः । योषितां विभूषणानि नूपुररसनाकिंकिणिकादिध्वनितानि । तेषां रवः शब्दः । एवमादिभिर्मनोहारिभिः शब्दैः श्रोत्रेन्द्रिया(येऽ)वबद्धं हृदयं येन हरिणेन, प्रणिहितं मनो येन श्रोत्रेन्द्रियविषये स श्रोत्रावबद्धहृदयः कुरंगो विनाशमाप्नोति गोचर्याखेटके । तद्वदपरोऽपि प्रमादीति ॥ ४१ ॥

---

अव०—दुःखकारणं कर्म तया तया आदत्ते ॥ ४० ॥ कलास्त्यस्मिन्निति कलं ग्रामरागरीत्या युक्तं, रिभितं घोलनासारं, योषिद्विभूषणं नूपुरादि, श्रोत्रेन्द्रियेऽवबद्धं हृदयं येन ॥ ४१ ॥

**गतिविभ्रमेङ्गिताकारहास्यलीलाकटाक्षविक्षिप्तः । रूपावेशितचक्षुः शलभ इति विपद्यते विवशः ॥४२॥**

टीका—गतेर्विभ्रमो मन्थरप्रकारः सविकारा गतिरित्यर्थः । इङ्गितं निरीक्षितं स्निग्धया दृष्ट्यावलोकनं । आकारस्तन्मुखोरुसन्निवेशविशेषः । ( हास्यलीलेतिमूलं ) हास्यं सविलासं सलीलं हसितमित्यर्थः । कटाक्षोऽपाङ्गसन्निवेशिता दृष्टिः सामर्षा । एभिर्विशेषणैर्विक्षिप्तः प्रेरितो वनितारूपादौ निवेशितचक्षुः शलभ इव विपद्यते विनश्यति । शलभो हि दीपशिखावलोकनाक्षिप्तोऽभिमुखः पतितस्तत्रैव भस्मसाद्भवतीति ॥ ४२ ॥

**स्नानाङ्गरागवर्तिकवर्णकधूपाधिवासपटवासैः । गन्धभ्रमितमनस्को मधुकर इव नाशमुपयाति ॥ ४३ ॥**

टीका—कतिपयसुरभिद्रव्यसमाहारः स्नानं । अङ्गरागश्चन्दनकुंकुमादिविलेपनं । धूपद्रव्यकृता वर्तिरेव वर्तिका सैव धूपो वर्तिकधूप एवासौ संजायते सैव दह्यमाना धूपायते । वर्णकाः कृष्णादयः । अधिवासो मालतीकुसुमादिभिः । पटवासो गन्धद्रव्यचूर्णः । एभिः स्नानादिभिर्गन्धैर्भ्रमितमाक्षिप्तं मनो यस्यासौ गन्धभ्रमितमनस्कः । मधुकरः शिलीमुख इव विनाशं प्राप्नोति । सुरभिणा पद्मगन्धेनाकृष्टश्चञ्चरीकस्तन्मध्यवर्तिगन्धमाजिघ्रन्नस्तमिते सवितरि संकुचत्यपि नलिने नाशमुपयाति । निरुद्धत्वाच्च तत्रैव परासुतां लभत इति ॥ ४३ ॥

---

अव०—सविकारा गति. नयनोत्थं निरीक्षितं देहसन्निवेशः प्रेरितः ॥ ४२ ॥ स्नानगात्रप्रक्षालनं चूर्णं वर्तिगात्रानुलेपिनी वर्तीनां समूहो वार्तिकं चन्दनादिभिः स्नानादिभिर्गन्धैर्भ्रमितमाक्षिप्तं मनोऽस्येति सः ॥ ४३ ॥

**मिष्टान्नपानमांसौदनादिमधुररसविषयगृद्धात्मा । गलयंत्रपाशबद्धो मीन इव विनाशमुपयाति ॥४४॥**

टीका–मिष्टमत्यन्तस्वादु सर्वदोषरहितं भक्ष्यभोज्यं विविधं । पानकादि च मद्यं प्रसन्नादि वा पानं । मांसं छागहरिणश्वकरशशलावकादीनां । शाल्योदनादि च । मधुरो रसः खंडशर्करादि च । स एव विषयो रसनायास्तस्मिन् गृद्धः सक्त आत्मा यस्य । ( लोहांकुशको ) गलयंत्राणि जालादिमर्माणि सिंहव्याघ्रद्वीपिमूषिकादिव्यापादनहेतोः क्रियन्ते तन्तुमयाः पाशास्तित्तिरलावकमयूरादिव्यापत्तये निक्षिप्यन्ते । अथवा यंत्रमानायः स एव पाशस्तेन बद्धो वशीकृतः । मीनः पृथुरोमा मृत्युमुखमाविशति ॥ ४४ ॥

**शयनासनसंबाधनसुरतस्नानानुलेपनासक्तः । स्पर्शव्याकुलितमतिर्गजेन्द्रइव बध्यते मूढः ॥ ४५ ॥**

टीका–शयनं सप्रमाणा शय्या तुल्योपधानकप्रच्छादनपटसनाथा । आसनमप्यासंदकादि व्यपगतोपद्रवं मृदुवर्द्धुपट्टादियुतं संबाहनमंगमर्दनं । सुरतं कोमलगात्रयष्टेः प्रियायाः चुंबनालिंगनादि । स्नानानुलेपने पूर्वोक्ते । तेषु सक्तो व्यसनी । शय्यादिसंस्पर्शेन प्रियांगस्पर्शेन च व्याकुलितमतिर्मोहितबुद्धिर्गजेन्द्र इव गणिकाकरिणीभिः कराग्रैः संस्पर्शमानो वीज्य-

---

अव०–खंडशर्करादिः स एव विषयो रसनायास्तसिन्नासक्त आत्मा यस्य । गलो लोहमयोऽङ्कुशो यंत्रं जालं पाशो वालादिमयः तित्तिरादिग्रहणहेतुस्तैर्बद्धो वशीकृतः ॥ ४४ ॥ आसनं मसूरकादि, संबाधनं विश्रामणा, सुरतं मैथुनासेवा, अनुलेपनं कुंकुमादि, स्पर्शः प्रियायाश्चुंबनादिः मोहितमतिः ॥ ४५ ॥

मानश्च सत्कुसुमैः पल्लवैः कांचित्सुंपत् ( ञ्चुम्बन् ) कांचिद्दन्तकाण्डेन प्रेरयन् कांचिदग्रे कृत्वा काचित्पृष्ठतो विधाय पार्श्वतश्चान्यां स्वच्छन्दचारी क्रीडन्ननेकविधावारिपंजरमध्यमानीतः । ततश्चाधोरणेनाधिरूढस्तीक्ष्णांकुशाग्रग्राहग्रस्तमस्तकः परवशोऽनेकप्रकारं दुःखमनुभवतीति ॥ ४५ ॥

इत्थमेवेन्द्रियविषयगृद्धानामपाय(वृन्दं)द्वारमात्रमुक्तमित्युपसंहरति—

**एवमनेके दोषाः प्रणष्टशिष्टेष्टदृष्टिचेष्टानाम् । दुर्नियमितेन्द्रियाणां भवन्ति बाधाकरा बहुशः ॥४६॥**

टीका—एवमुक्तप्रकारेण प्रत्यक्षप्रमाणसमधिगम्य एकैको दोषः प्रदर्शितः । तद्द्वारेण च परलोकेऽप्यनिवृत्तविषयसंगानां बहवो दोषा नारकतिर्यग्योनिभवादिषु भवन्ति । केषामेते दोषाः? प्रणष्टशिष्टेष्टदृष्टिचेष्टानां । शिष्टा विवेकिनः परलोकपथप्ररूपणानुष्ठाननिपुणास्तेषामिष्टा दृष्टिचेष्टा । दृष्टिः सन्मार्गोपदेशि ज्ञानं । चेष्टा क्रियानुष्ठानं । उभयावेते शिष्टेष्टदृष्टिचेष्टे प्रणष्टे येषां ते प्रणष्टशिष्टेष्टदृष्टिचेष्टास्तेषां । दुर्नियमितेन्द्रियाणां दोषेषु न नियमं ग्राहितानि इन्द्रियाणि यैः । श्रोत्रादिविषयव्यसनानि दोषास्तेषां दुर्नियमितेन्द्रियाणां । बाधाकराः पीडाकराः शारीरमानसाशर्मकारिणोऽनेकशः संसारोदधौ परिवर्तनमाचरतामिति ॥ ४६ ॥

---

अव०—शिष्टा विवेकिनः परलोकपथनिपुणास्तेषामिष्टा दृष्टिचेष्टाः । दृष्टिः सन्मार्गोपदेशनं चेष्टाः क्रियाः दोषेष्वनियमं ग्राहितानीन्द्रियाणि यैः ॥ ४६ ॥

अपि चैते कुरंगादयो विनाशभाजः संप्राप्ता एकैकविषयासक्ताः । यः पुनः पञ्चस्वपीन्द्रियार्थेषु सक्तः स किल यज्जीवति तदेव चित्रमित्युपसंहरन्नाह–

**एकैकविषयसंगाद्रागद्वेषातुरा विनष्टास्ते । किं पुनरनियमितात्मा जीवः पञ्चेन्द्रियवशार्तः ॥ ४७ ॥**

टीका–शब्दाद्येकैकविषयसंगाद्रागद्वेषवशगतत्वादातुरास्ते कुरंगादयो विनाशं गताः । मान्द्याभिभूतापथ्याश्रयातुरवत् । किं पुनरनियमितात्मेति नात्मा नियमं ग्राहितो न निवारितः शब्दादिविषयेषु प्रीतिमनुबध्नन् पञ्चानामिन्द्रियाणां वशवर्ती अत एवार्तोऽप्राप्तान् विषयानभिलषन् प्राप्तांश्चावियोगतश्चिन्तयन्निति ॥ ४७ ॥

न च कश्चिच्छब्दादिर्विषयः समस्ति योऽभ्यस्यमानः सर्वथा तृप्तिं करिष्यतीति एतत्प्रदर्शयन्नाह–

**न हि सोऽस्तीन्द्रियविषयो येनाभ्यस्तेन नित्यतृषितानि । तृप्तिं प्राप्नुयुरक्षाण्यनेकमार्गप्रलीनानि ॥४८॥**

टीका–नैवास्तीन्द्रियविषयः स शब्दादिर्येनाभ्यस्तेन पुनः पुनरासेव्यमानेन । नित्यतृषितानि नित्यमेव साभिलाषाणि सपिपासानि तृप्तिं प्राप्नुयुः अक्षाणीन्द्रियाणि । अनेकस्मिन्मार्गे शब्दादावनेकभेदे प्रकर्षेण लीनानि तन्मयतां गतानि तदासक्तानि । पुनः पुनराकांक्षन्त्येव स्वविषयानपि चैतानीन्द्रियाणि स्वविषयेषु नैकरसानि ॥ ४८ ॥

---

अव०–इन्द्रिययोग्यो विषयो भावः । येनाक्षाणीन्द्रियाणि तृप्तिं प्राप्नुवन्ति अनेकस्मिन्मार्गे प्रकर्षेण लीनानि ॥ ४८ ॥

यस्मादिष्टमप्यनिष्टमनिष्टमपीष्टं मन्यत इति ( तद् ) दर्शयन्नाह–

**कश्चिच्छुभोऽपि विषयः परिणामवशात्पुनर्भवत्यशुभः। कश्चिदशुभोऽपि भूत्वा कालेन पुनः शुभीभवति॥**

टीका–इष्टोऽपि कश्चिद्विषयो वेणुवीणागायनादीनां यथा ध्वनिर्बुभुक्षार्तस्य पिपासितस्य वा रागपरिणामवशात् प्रागिष्टः पश्चात् द्वेषपरिणामादनिष्ट आपद्यते। स एव पुनरशुभः कालान्तरेण रागपरिणामादिष्टो जायत इति । अनवस्थितप्रेमाणीन्द्रियाणीत्यतस्तज्जनितं सुखमनित्यमिति ॥ ४९ ॥

तस्मात्प्रयोजनापेक्षाणि व्यापार्यन्ते जीवेनेत्याह–

**कारणवशेन यद्यत् प्रयोजनं जायते यथा यत्र। तेन तथा तं विषयं शुभमशुभं वा प्रकल्पयति ॥५०॥**

टीका–एकः कश्चिद्रागाध्मातमानसो गीतध्वनिमाकर्णयिषुः श्रोत्रं व्यापारयति। एवमभीष्टरूपालुलोकयिषया चक्षुर्व्यापारयति। एवं शेषेन्द्रियविषयेष्वपि प्रयोजनवशाद्व्यापारयति घ्राणादीनि। तेन प्रयोजनेन तथातथोत्पन्नेन तं विषयं शब्दादिकमिष्टतयानिष्टतया वा रागद्वेषवशात् परिकल्पयंति एके। तदन्यास्तु ॥ ५० ॥

---

अव०–विषयो रूपादिः परिणामवशात् मृतकलेवरादिवशादशुभः स्यात् कचवरादिः अशुभोऽपि वर्यः स्याद्धूपनादिना ॥ ४९ ॥ कारणवशेन निमित्तसामर्थ्येन यत् यत् प्रयोजनमर्थो जायते, यथा येन प्रकारेण स्यात्तथा तेनैव प्रकारेण तमर्थं शुभमशुभं चिन्तयति, यथा शत्रुघ्नं विषं पितृघ्नं च ॥ ५० ॥

**अन्येषां यो विषयः स्वाभिप्रायेण भवति तुष्टिकरः। स्वमतिविकल्पाभिरतास्तमेव भूयो द्विषन्त्यन्ये॥५१॥**

टीका—विवक्षितपुरुषाद्येऽन्ये । तेषां यो विषयः शब्दादिः । स्वाभिप्रायेणोल्बणरागाणां स्वमनःपरिणामवशात् । परितोषमाधत्ते । अपरे तु स्वमतिविकल्पाभिरताः प्रबलद्वेषवशात् स्वमनोविकल्पशिल्पघटनया । तमेव विषयं पुनरनिष्टतया द्विषन्ति ॥ ५१ ॥

एवमनवस्थितप्रेमाणो विषयाः परमार्थतो न प्रिया न वाप्रिया इति दर्शयन्नाह—

**तानेवार्थान् द्विषतस्तानेवार्थान् प्रलीयमानस्य । निश्चयतोऽस्यानिष्टं न विद्यते किंचिदिष्टं वा ॥५२॥**

टीका—तानेवेष्टान् शब्दादीन् द्विषतो विषयजुज ( गाँ ) स्तानेव च द्वेष्यानुप्रलीयमानस्य तन्मयतां गच्छतः समुपजातरागस्य । निश्चयतः परमार्थतः । नैकान्तेनैवास्य संभवति किंचिदिष्टमनिष्टं वा ॥ ५२ ॥

इहपरलोकयोश्च कर्मबन्धादृते न कश्चिदपि गुणः संभाव्यते रागिणो द्वेषिणो वेति दर्शयन्नाह—

**रागद्वेषोपहतस्य केवलं कर्मबन्ध एवास्य । नान्यः स्वल्पोऽपि गुणोऽस्ति यः परत्रेह च श्रेयान् ॥ ५३ ॥**

---

अव०—शब्दादिः स्वरोचनेन परितोषमाधत्ते, स्वमत्या विकल्पो द्विषादिपरिणामजनितविकल्पनं तत्राभिरता आसक्ताः ॥ ५१ ॥ कदाचिद्द्वेषवशतः समुपजातरागस्य कदाचिद्रागवशात् निश्चयतः परमार्थतस्तद्रागद्वेषकारणमेव ॥ ५२ ॥ रागद्वेगकृतप्रतिघातस्य ॥ ५३ ॥

टीका–रागद्वेषाभ्यामुपहतमानसस्य विज्ञाप्यते नापरः श्रेयान् गुणः परलोके। कश्चिदिहलोके वा विद्यत इति ॥ ५३ ॥

कथं पुनः कर्मबन्धादन्यो गुणो नास्तीति विज्ञापयन्नाह–

**यस्मिन्निन्द्रियविषये शुभमशुभं वा निवेशयति भावम्। रक्तो वा द्विष्टो वा स बन्धहेतुर्भवति तस्य॥५४॥**

टीका–शब्दादिके विषये भावं चित्तपरिणामं शुभमिष्टं रागयुतो निवेशयति, अशुभं वानिष्टं भावं द्वेषयुतः स्थापयति। स स भावस्तस्यात्मनो ज्ञानावरणादिकर्मणोऽष्टविधस्य बन्धहेतुर्भवति सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते संबन्ध इतिं वचनात् ( तत्त्वार्थ-७-२ ) ॥ ५४ ॥

कथं पुनरात्मप्रदेशेषु कर्मपुद्गला लगन्तीत्याह–

**स्नेहाभ्यक्तशरीरस्य रेणुना श्लिष्यते यथा गात्रम्। रागद्वेषाक्लिन्नस्य कर्मबन्धो भवत्येवं ॥ ५५ ॥**

टीका–तैलादिना स्नेहेनाभ्यक्तवपुषो यथा रजःकणाः श्लिष्यन्ति नातिसूक्ष्मस्थूलास्तथा रागद्वेषपरिणामस्नेहार्द्रस्य ज्ञानावरणादिवर्गणायोग्याः कर्मपुद्गलाः प्रदेशेष्वात्मनो लगन्तीत्यर्थः ॥ ५५ ॥

---

अव०–इन्द्रियव्यापारे शब्दादिप्रवर्तने भव्यमभव्यं वा करोति परिणामं रागयुत. द्वेषयुतः स आत्मनो भावः कर्मबन्धस्य तस्य तस्य निमित्तं आत्मनो जीवस्य भवति ॥ ५४ ॥

संप्रति रागद्वेषप्रधानान् कर्मबन्धहेतून् समस्तानेवोपसंहरन्नाह–

**एवं रागद्वेषौ मोहो मिथ्यात्वमविरतिश्चैव । एभिः प्रमादयोगानुगैः समादीयते कर्म ॥ ५६ ॥**

टीका–उक्तलक्षणौ रागद्वेषौ । मोहो मोहनीयं । मिथ्यात्वं तत्त्वार्थाश्रद्धानलक्षणं । अविरतिरनिवृत्तिः कर्माश्रवेभ्यः । एभी रागादिभिर्विकथादिप्रमादपञ्चकसहितैर्मनोवाक्काययोगानुगतैः कर्मादीयते गृह्यते स्वप्रदेशेष्वात्मना निधीयत इत्यर्थः । ततश्च घटीयंत्रन्यायेन रागादीनां कर्मबन्धहेतुत्वं । कर्मणोऽपि रागादिपरिणामः ॥ ५६ ॥

ततश्च–

**कर्ममयः संसारः संसारनिमित्तकं पुनर्दुःखम् । तस्माद्रागद्वेषादयस्तु भवसन्ततेर्मूलम् ॥ ५७ ॥**

टीका–कर्मविकारो नारकत्वं तिर्यक्त्वं मनुष्यत्वं देवत्वं । नारकादिरूपसंसारकारणं दुःखं शारीरं मानसं वा । न ह्यनारको नरके दुःखमनुभवति । एवमितरत्रापि । तस्माद्रागद्वेषादयः पञ्च कर्मबन्धहेतवः नारकादिभवसन्ततेर्भवपरंपराया मूलं बीजं प्रतिष्ठेति ॥ ५७ ॥

कः पुनरस्य रागद्वेषादिजनितस्य संसारचक्रस्य भङ्गोपाय इत्याह–

**एतद्दोषमहासंचयजालं शक्यमप्रमत्तेन । प्रशमस्थितेन घनमप्युद्वेष्टयितुं निरवशेषम् ॥ ५८ ॥**

---

अव०–मोहोऽज्ञानं, तत्त्वार्थाश्रद्धानं मिथ्यात्वं, आश्रवेभ्योऽनिवृत्तिरविरतिः, रागादिभिर्विकथादिप्रमादमनःप्रभृतयोगयुतैः ॥ ५६ ॥ एतेषां दोषाणां संचयस्य जालमिव जालं दुःखहेतुत्वात् आमूलादुद्धर्तुमप्रमत्तेन शक्यम् ॥ ५८ ॥

टीका–दोषाणां रागद्वेषादीनां तज्जनितकर्मणां च महासंचय उपचयः। दोषमहासंचय एव जालं। जालमिव जालं। यथा मीनमकरादीनामादायकं जालं जीवनापहारि। तद्वदेतदपि जन्मान्तरेषु सत्त्वानामनेकदुःखसंकटावतारणे प्रत्यलं जीवितापहारि चेति। तदेतद्भक्ष्यमप्रमत्तेन। उद्वेष्टयितुं विनाशयितुं। प्रमादः कषायनिद्रादिस्तद्रहितेन प्रशमस्थितेनेति प्रशमार्पितमनसा प्रशमैकरसेन। घनं गहनमेतज्जालं। निरवशेषमामूलादुद्धर्तुमिति ॥ ५८ ॥

**अस्य तु मूलनिबन्धं ज्ञात्वा तच्छेदनोद्यमपरस्य। दर्शनचारित्रतपःस्वाध्यायध्यानयुक्तस्य ॥ ५९॥**

टीका–पञ्चभिः कारिकाभिः कुलकम्। अस्य महादोषसंचयजालस्य। मूलनिबन्धं मौलं कारणं विज्ञाय। तच्छेदने उद्यम उत्साहः परो यस्य ( तत्परस्तत्परस्तस्य ), मयैतन्महाजालं छेत्तव्यं। दर्शनं तत्त्वार्थश्रद्धानलक्षणं। चारित्रं सामायिकादि। तपो द्वादशभेदमनशनादि। स्वाध्यायः पञ्चप्रकारो वाचनापृच्छनादिः। ध्यानमेकाग्रचित्तनिरोधलक्षणं धर्म्यं शुक्लं च। धर्मादनपेतं धर्म्यमाज्ञापायविपाकसंस्थानविचयभेदाच्चतुर्विधं, शुक्लमप्यत्यन्तविशुद्धाशयस्यापृथक्त्वैकत्ववितर्कमविचारं (पृथक्त्ववितर्कसविचारमेकत्ववितर्काविचारं) सूक्ष्माक्रियाप्रतिपाति व्युपरतक्रियालक्षणं चतुर्धा। एभिः सम्यग्दर्शनादिपरिणामैर्युक्तस्य ॥ ५९ ॥

---

अव०–रागद्वेपादिजालस्य मूलकारणं जीवस्येति शेषः ॥ ५९ ॥

तथा—

प्राणवधानृतभाषणपरधनमैथुनममत्वविरतस्य । नवकोट्युद्गमशुद्धोञ्छमात्रयात्राधिकारस्य ॥ ६० ॥

टीका-प्रमत्तयोगात्प्राणव्यपरोपणं प्राणवधः । अनृतभाषणं सद्भूतनिह्नवो नास्त्यात्मेति, असद्भूतोद्भावनं सर्वगत आत्मेति, विपरीतं कटुकसावद्यादिवचनं च गामश्वं भाषमाणस्य, विपरीतं । कटुकं परुषमाक्रोशादि, सावद्यवचनं अनेन मार्गेण मृगपशुयूथं गतमिति लुब्धकायाचष्टे । चौरबुद्ध्या परस्वं आत्मसात्करोति परधनहरणं । मैथुनं द्वयोर्योगः सचित्तयोः सचित्ताचित्तयोर्वा । मिथुनस्य भावो मैथुनं स्त्रीपुंनपुंसकवेदोदयादासेवनं । ममत्वलक्षणः परिग्रहो ममेदं स्वं अहमस्य स्वामीति मूर्छा परिग्रह इति वचनात् ( तत्त्वार्थ ) । एभ्यः प्राणिवधादिभ्यो विरतस्य । निशि भोजनं तु परिग्रहलक्षणेन अदत्तादानलक्षणेन वान्तर्भावितं । एवं मूलगुणानभिधायोत्तरगुणानभिधित्सुराह—कोटिरंशं यथा षट्कोटिस्तंभः षडश्रिः षडंश इत्यर्थः । न स्वयं हन्ति, नान्येन घ्नन्ति, घ्नन्तमन्यं नानुमोदते, एतास्तिस्रः कोटयः । तथा न स्वयं पचति, न पाचयति, पचमानं नानुमोदते, इत्येता अपि तिस्रः कोटयः । तथा न स्वयं क्रीणाति, न क्रापयति, क्रीणानमन्यमपि नानुमोदते, इत्येताश्चान्यास्तिस्रः । एकत्र समाहृता नव कोटयः पुनरिमा द्विधा भिद्यन्ते अविशुद्धकोटिर्विशुद्धकोटिश्च । आद्याः षड्विशुद्धकोटिः पाश्चात्यास्तिस्रो भवन्ति विशुद्धकोटिः । उद्गमोऽन्वेषणं यथा " उग्गमं सेअ पुच्छिजेत्यादि " ।

अव०—नवकोटयो ३ हनन ३ पचन ३ क्रयणानां स्वयं करणकारणानुमतिभिः त्रिरूपास्ताभिरुद्गमादिभिश्च शुद्धं यदुञ्छमात्रं भैक्ष्यं तेन यात्राधिकारात् संयमयात्रा तथा निर्वाहो यस्य शुद्धतमाहारोपधिपात्रग्रहणतत्परस्येति भावार्थः ॥ ६० ॥

तेन शुद्धमुद्गमशुद्धं । उञ्छमिवोञ्छं लूनकेदारपतितव्रीहिकणाद्युच्चयनमुञ्छं न कस्यचित्कृषीवलादेः पीडाकारि । तथाऽकारितासंकल्पितानुमतम् निसृष्टं कल्पनीयमादीयमानं न कंचन सत्त्वमुपहन्ति । उञ्छमेवोञ्छमात्रं । तेन तादृशा यात्रायामधिकारो यस्य स उञ्छमात्रयात्राधिकारः । यात्रा त्वहोरात्राभ्यन्तरे विहितक्रियानुष्ठानं तत्राधिकृतस्य नियुक्तस्येत्यर्थः ॥६०॥

**जिनभाषितार्थसद्भावभाविनो विदितलोकतत्त्वस्य । अष्टादशशीलाङ्गसहस्रधारिणः कृतप्रतिज्ञस्य ॥६१॥**

टीका—जिनैर्भाषितोऽर्थ उत्पादव्ययध्रौव्ययुक्तो जीवादिः सप्तविधः । स गणधरैः सूत्रेण सूचितस्तस्यार्थस्य सद्भावं भावयति तच्छीलश्च । एवमेतत् । तद्यथा भगवद्भिरुक्तं गणधरैर्दृब्धं तथैवायं नान्यथेति सद्भावभाविनः। विदितमवगतं लोकतत्त्वं येनासौ विदितलोकतत्त्वः जीवाजीवाधारक्षेत्रं लोकस्तस्य तत्त्वं परमार्थः । नास्त्यत्र वालाग्रप्रमाणोऽपि प्रदेशो यत्र त्रसत्वेन स्थावरत्वेन वा नोत्पन्नो मृतो वा यथासंभवं । अथवाधोमुखमल्लकाकृतिर्मध्ये स्थालाकार उपरि मल्लकसमुद्गाकारः नारकतिर्यङ्मानुषदेवाधिवासो जन्मजरामरणोपद्रवबहुलः । अष्टादशशीलांगसहस्रधारिणः ( रण ) कृतप्रतिज्ञस्य अष्टादशशीलांगसहस्राण्युपरि वक्ष्यमाणानि धर्माद्भूम्यादीन्द्रियेत्यस्यां कारिकायां अष्टादशशीलांगसहस्राणि धारयितव्यानि यावज्जीवं मयेति आरूढप्रतिज्ञस्य ॥ ६१ ॥

---

अव०—सर्वज्ञभाषितजीवादिपदार्थपरमार्थस्वरूपभावनाशीलस्य जीवाजीवाधारभूतलोकावगतस्वरूपस्य वक्ष्यमाणाष्टादशसहस्रशीलाङ्गधारणकृतप्रतिज्ञस्य ॥ ६१ ॥

**परिणाम(म)पूर्वमुपागतस्य शुभभावनाध्यवसितस्य। अन्योऽन्यमुत्तरोत्तरविशेषमभिपश्यतःसमये॥६२॥**

टीका—शुद्धप्रकर्षयोगादपूर्वः परिणाम उच्यते मनस्तमनुप्राप्तस्य। शुभभावनाध्यवसितस्य। अध्यवसितमध्यवसायः। शुभभावनाः पञ्चानां महाव्रतानां पञ्चविंशतिर्भावनाः परिपठिता अनित्यत्वादिका वक्ष्यमाणा (वा) द्वादश भावनाः तदध्यवसायस्य। समये सिद्धान्ते। अन्योऽन्यं परस्परं द्वयोर्विशेषयोरयमुत्तरः प्रधानं, अमुष्मादप्ययं विशेषः प्रधानतर इत्यादि विशेषमतिशयं (मभिप्रायं) पश्यतो भावनामयेन ज्ञानेनेति॥ ६२ ॥

**वैराग्यमार्गसंस्थितस्य संसारवासचकितस्य। स्वहितार्थाभिरतमतेः शुभेयमुत्पद्यते चिन्ता ॥ ६३ ॥**

टीका—वैराग्यपथप्रस्थितस्य सम्यग्दर्शनादित्रयं वैराग्यमार्गः। संसारवासाच्चकितस्य त्रस्तस्येत्यर्थः। स्वहितमैकान्तिकादिगुणयुक्तं मुक्तिसुखं तदेवार्थः स्वहितार्थे आभिमुख्येन रता बद्धा प्रीतिर्मतिर्यस्य तस्यैवंप्रकारस्य। शुभेयमुत्पद्यते चिन्ता। इयमिति वक्ष्यमाणा। निर्जराहेतुत्वाच्छुभा जायते चिन्ता। अत्र कुलकपरिसमाप्तिः ॥ ६३ ॥

तामेव चिन्तां स्पष्टयन्नाह—

**भवकोटीभिरसुलभं मानुष्यं प्राप्य कः प्रमादो मे। न च गतमायुर्भूयः प्रत्येत्यपि देवराजस्य ॥ ६४॥**

---

अव०—दर्शनमोहनीयकर्मक्षयोपशमेन दर्शनशुद्धिरूपमनुप्राप्तस्य धर्माध्यवसाये अध्यवसायस्य अन्योन्यं स्वदर्शनपरदर्शनापेक्षयोत्तरोत्तरविशेषं पश्यतो जिनागमे ॥ ६२ ॥ त्रस्तस्य स्वहितार्थे आत्मपथ्यमोक्षप्रयोजने आभिमुख्येन रता बद्धा प्रीतिर्मतिर्यस्य ॥ ६३ ॥ अनन्तसंख्यायाः सूचका भवकोटयः ॥ ६४ ॥

टीका—कोटीशब्दः संख्यावाची। स चानन्तसंख्यायाः सूचकः। भवा नरकतिर्यग्देवाख्यास्तेषां बह्वीभिः कोटीभिरनन्ताभिरतीताभिरपि न सुलभं दुर्लभमेव। मनुष्यस्य भावो मानुष्यं मानुष्यजन्मेत्यर्थः। तदेवंविधमतिदुःप्रापं प्राप्य। कोऽयं मम प्रमादोऽवबुध्यमानस्यैवमनुष्ठानं। प्रमादो ज्ञानादिषु मुक्तिसाधनेषु। कदाचिदिदमाशंकेत मनुष्यत्वमेवास्तु सदा सुन्दरमक्षीणमिति। तच्च न। यतः। न च गतमायुरित्यादि—प्रतिक्षणमुदयप्राप्तं वेद्यमानं अनुभावाच्च परिगलति। न च क्षीणं पुनरावर्तते सौधर्माधिपतेरपि शक्रस्य न प्रत्यागच्छति किं पुनर्नरस्येति ॥ ६४ ॥

न च निर्द्वन्द्वं मनुष्यजन्म यस्मात्—

**आरोग्यायुर्बलसमुदयाश्चला वीर्यमनियतं धर्मे। तल्लब्ध्वा हितकार्ये मयोद्यमः सर्वथा कार्यः ॥ ६५ ॥**

टीका—नीरुजत्वमारोग्यं तच्चलमनित्यमित्यर्थः। नीरुजोऽपि रोगान् लभन्ते सनत्कुमारादिवत्। आयुरपि शुक्रबिन्दुराधानात् प्रभृति गर्भकौमारयौवनस्थविरावस्थासु प्रतिक्षणं क्षयमुक्तमध्यवसानादिभिश्च प्रकारैः सप्तभिर्भेदमुपैति। बलं प्राण उत्साहो वीर्यान्तरायक्षयोपशमजः सामर्थ्यविशेषः। स च बलवतो दृष्टः। पुनस्तस्यैव दुर्बलावस्थायां न संभवतीत्यनित्य एव। समुदायाश्चला इति धनधान्यादिनिचयाः क्षणभंगुराः। वीर्यं चोत्साहः परिषहजयादौ तदनियतं विनश्वरं। धर्मे क्षान्त्यादिके। तल्लब्ध्वा प्राप्य। हितकार्ये हितं ज्ञानादि तदेव कार्यं। मयोत्साहः सर्वथा सर्वप्रकारमविश्रान्त्या कार्य इति ॥ ६५ ॥

---

अव०—समुदया धनधान्यादिनिचयाः। धर्मे क्षान्त्यादिके तदारोग्यादि लब्ध्वा प्राप्य हितकार्ये शास्त्राध्ययनादौ ॥ ६५ ॥

किं पुनस्तद्धितमित्याह—

**शास्त्रागमादृते न हितमस्ति न च शास्त्रमस्ति विनयमृते। तस्माच्छास्त्रागमलिप्सुना विनीतेन भवितव्यम् ६६**

टीका—शास्त्रलक्षणमुपरिष्टाद्वक्ष्यते शास्तीत्यादौ, शासनमुपदेशः। शासनादुपदेशदानात्त्राणाच्च शास्त्रं। भगवतो मुखपंकजादर्थनिर्गमः, गणधरास्यकमलेभ्यः सूत्रनिर्गमः, उभयं चैतच्छास्त्रशब्दवाच्यं। शास्त्रमेवागमः शास्त्रागमः। गणधरप्रभृत्याचार्यपरंपरया आगत इत्यागमः। शास्त्रागमादृते शास्त्रागमाद्विना नापरं हितमस्ति। न च शास्त्रलाभो भवत्यविनयस्य। आचार्यादिशुश्रूषया विनीतेन शास्त्रं प्राप्यते। तस्माच्छास्त्रागमलाभमिच्छता शास्त्रागमलिप्सुना विनीतेन भवितव्यमिति॥६६॥

सत्स्वप्यनेकेषु गुणेषु पुंसां विनय एव भूषणं परं नान्वयरूपसौभाग्यादीति दर्शयन्नाह—

**कुलरूपवचनयौवनधनमित्रैश्वर्यसंपदपि पुंसाम्। विनयप्रशमविहीना न शोभते निर्जलेव नदी ॥६७॥**

टीका—विशिष्टान्वयः कुलं क्षत्रियादि। रूपं शरीरावयवानां लक्षणान्वितः सन्निवेशविशेषः। वचनं मधुरं प्रियभाषित्ववाग्मित्वादि। यौवनं यूनो भावः। युवात्र मन्दरूपोऽपि शोभते प्रायो यौवनगुणादेव। धनं हिरण्यसुवर्णमणिमुक्ताप्रवालादि गोमहिष्या(ष्यौ)वाटिकादि वा। मित्रं स्नेहवान् पुरुषो विश्रंभस्थानं। ऐश्वर्यमीश्वरभावः प्रभुत्वं। संपच्छब्दः प्रत्येक-

---

अव०—शास्त्रमिह लौकिकं। अथवा शास्त्राणामागमो गमनं तल्लाभमिच्छता ॥ ६६ ॥ कुलमुग्रादि, वचनं माधुर्यादिगुणमत्, शेषाणि प्रतीतानि, संपच्छब्दः प्रत्येकं योज्यते ॥ ६७ ॥

मन्निसंबन्धनीयः । कुलसंपद्रूपसंपदैश्वर्यसंपदित्यादि । संपत् प्रकर्षविशेषः । एषापि कुलादिसंपन्न भ्राजते पुरुषाणां, विनयप्रशमविहीनत्वात् । विनयोऽभ्युत्थानासनप्रदानाञ्जलिप्रग्रहादिरुपचाराख्यः । प्रशमो माध्यस्थ्यमौदासीन्यम् । आभ्यां रहिता न शोभते । निर्जलेव नदी । यथा सरिज्जलशून्या हंससारसक्रौञ्चचक्रवाककुलैरासेव्यमाना न भ्राजते । तेनातिदीर्घगर्तामात्ररमणीयमुद्वेजकमेव भवतीत्येवं विनयरहितः पुमानिति ॥ ६७ ॥

**न तथा सुमहार्घ्यैरपि वस्त्राभरणैरलंकृतो भाति । श्रुतशीलमूलनिकषो विनीतविनयो यथा भाति॥६८॥**

टीका—न तथा शोभते । सुमहार्घ्यवस्त्राभरणभूषितः पुरुषः । यथा शीलश्रुतभूषितः । श्रुतमागमः । शीलं मूलोत्तरगुणभेदं चरणं । तयोर्निकषः (मूलनिकषः) परीक्षास्थानं । यदि विनीतस्ततस्तस्य तच्छ्रुतं, यदि च विनीतस्ततः शीलं । अन्यथा मूर्खो दुःशील एव च स्यात् । सुवर्णपरीक्षापाषाणको निकष इति प्रतीतं । तच्छ्रुतशीलपरीक्षाविनयनिकषे कर्तव्ये विशेषेण नीतः प्रापितो विनयो येनासौ विनीतविनय इति ॥ ६८ ॥

अपि च—

**गुर्वायत्ता यस्माच्छास्त्रारंभा भवन्ति सर्वेऽपि । तस्माद्गुर्वाराधनपरेण हितकांक्षिणा भाव्यम् ॥ ६९ ॥**

---

अव०—आगमव्रतमूलनिर्णयं प्रति निकषः कषपट्टसमानः परीक्षास्थानमित्यर्थः। वि विशेषेण नीतः प्राप्तो विनयो येन स तथा ॥६८॥
हितकांक्षिणा मोक्षाभिलाषिणा शिष्येण ॥ ६९ ॥

टीका–गृणन्ति प्रतिपादयन्ति शास्त्रार्थमिति गुरवः । तदायत्ताः शास्त्रारंभाः । सूत्रपाठप्रवृत्तिरर्थश्रवणप्रवृत्तिश्च गुर्वायत्ताः कालग्रहणस्वाध्यायप्रेषणोद्देशसमुद्देशानुज्ञापरिकराः शास्त्रारंभाः सर्वेऽपीत्युच्यन्ते । तस्मात् । गुर्वाराधनपरेणेति गुरोराराधनमहर्निशं पादसेवा । सम्यक्क्रियानुष्ठानं नृजलमल्लकढौकनं दण्डकग्रहणं तत्प्रवृत्तौ गमनं निर्विचारं तदभिहितानुष्ठानमित्याद्याराधनमभिमुखीकरणं । तत्परेणेति तदुपयुक्तेन भवितव्यमिति ॥ ६९ ॥

गुरौ चोपदिशति पुण्यवानहमिति य एवमनुग्राह्यो गुरूणां बहुमन्तव्य एव, न धिक्कार्य इति दर्शयति–

**धन्यस्योपरि निपतत्यहितसमाचरणघर्मनिर्वापी । गुरुवदनमलयनिसृतो**
**वचनसरसचन्दनस्पर्शः (वचनरसश्चंदनस्पर्श इति पाठान्तरम् )॥ ७० ॥**

टीका–धनं ज्ञानादि तल्लब्धा धन्यः पुण्यवान् । तस्योपरि निपतति । वचनसरसचन्दनस्पर्श इति वक्ष्यति । कीदृगसौ वचनसरसचन्दनस्पर्शः ? अहितसमाचरणघर्मनिर्वापी अहितमुत्सूत्रं समाचरणं क्रियानुष्ठानं । अहितसमाचरणमेव घर्मस्तापविशेषस्तं निर्वापयत्यपनयति निरस्यति तच्छीलश्चेति । गुरुवदनमलयनिसृत इति गुरोराचार्यादेर्वदनं मुखं तदेव मलयपर्वतस्तस्मान्निसृतो निर्गतः । वचनमेव सरसचन्दनं स्नेहोपबृंहितहितोपदेशगर्भं सरसं तदेव चन्दनं तस्य स्पर्शः शीतो घर्मापनयनसमर्थः । मलये तु सरसचन्दनमार्द्रमभिनवच्छिन्नं । तस्य स्पर्शः घर्मापहारी भवति सुतरां । अथवा रसश्चन्दनस्पर्शः । रसो द्रवताचन्दनपंकः सपानीय इत्यर्थः ॥ ७० ॥

---

अव०–अपथ्यसमाचरणं तदेव घर्मस्तदपनोदकर्ता गुरुमुखमलयाचलोद्भूतचन्दनरसस्पर्शः ॥ ७० ॥

एवं च हितोपदेशेनानुगृह्णतः शिष्यानाचार्यस्य कः प्रत्युपकारः शिष्येण विधेय इत्याह–

**दुष्प्रतिकारौ मातापितरौ स्वामी गुरुश्च लोकेऽस्मिन्। तत्र गुरुरिहामुत्र च सुदुष्करतरप्रतीकारः॥७१॥**

टीका–दुःखप्राप्यप्रतीकारो दुःकर इति वा दुष्प्रतिकारः। मातापितरौ तावद्दुष्प्रतिकारौ। माता तु जातमात्रस्यैवाभ्यंगस्नानस्तनक्षीरदानमूत्राशुचिक्षालनादिनोपकारेण वृद्धिमुपनयति कल्प(ल्य)वार्ताद्याहारप्रदानेनोपकारवती अदृष्टपूर्वस्याकृतोपकारस्य वा अपत्यस्य दुःप्रतिकारा। न हि तस्याः प्रत्युपकारः शक्यते कर्तुम्। पितापि हितोपदेशदानेन शिक्षाग्राहणेन वस्त्रपरिधानप्रावरणादिनोपग्रहेणानुगृह्णानो दुःप्रतिकारः। स्वामी राजादिर्भृत्यानां जलदानाकरादिना कृत्वेत्युपकारकः। भृत्यास्तु न तथा प्रत्युपकारसमर्थाः। प्राणव्ययमहार्घां यद्यपि श्रियमानयन्ति स्वामिनो भृत्यास्तथापि पूर्वमकृतोपकाराणामेव भृत्यानामुपकारकः स्वामी, भृत्यास्तु कृतोपकाराः प्रत्युपकुर्वन्ति। गुरुराचार्यादिः, स च दुःप्रतिकारः, सन्मार्गोपदेशदायित्वात् शास्त्रार्थप्रदानात् संसारसागरोत्तारणहेतुत्वात् इहामुत्र च इहलोके परलोके सुदुर्लभतरः प्रतीकारो यस्य गुरोरिति सुष्ठु दुर्लभतरः प्रतीकार इति॥ ७१॥

संप्रति विनयस्य पारंपर्येण पर्यन्तवर्ति मोक्षाख्यं फलं दर्शयन्नाह–

**विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम्। ज्ञानस्य फलं विरतिर्विरतिफलं चाश्रवनिरोधः॥७२॥**

---

अव०–शुश्रूषा श्रोतुमिच्छा यदाचार्य उपदिशति तत्सम्यक् श्रौति क्रिययोपयोगं च नयति॥ ७२॥

टीका—विनयस्य फलं शुश्रूषा श्रोतुमिच्छा यदाचार्य उपदिशति तत् सम्यक् शुश्रूषते श्रुत्वा चानुतिष्ठति । गुरोः सकाशादाकर्ण्य किं फलमिहावाप्यतेऽत आह—गुरुशुश्रूषायाः फलं श्रुतज्ञानमागमज्ञानलाभ इत्यर्थः । ज्ञानस्य किं फलं ? विरतिराश्रवद्वारेभ्यो निवृत्तिः । विरतेः फलमाश्रवद्वारस्थगनं । विरतौ सत्यामाश्रवद्वाराणि स्थगितानि भवन्ति । ततश्चाश्रवद्वारस्थगनात् संवरो जायते फलभूतः संवरात्मा भवति अपूर्वकर्मप्रवेशनिरोधः ॥ ७२ ॥

**संवरफलं तपोबलमथ तपसो निर्जराफलं दृष्टम् । तस्मात्क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥ ७३ ॥**

टीका—संवरस्य फलं तपोऽनुष्ठानं प्राक्तनकर्मक्षपणार्थं । तपसि बलं तपोबलं तपसि कर्तव्ये शक्तिविशेषः । तपसस्तु निर्जराफलं कर्मपरिशाटनं । तस्मात् कर्मापगमात् क्रिया निवर्तते सैव फलं निर्जरायाः । क्रियानिवृत्तेर्निरुद्धयोगः स्यात् अयोगित्वात् ॥ ७३ ॥

**योगनिरोधाद्भवसन्ततिक्षयः सन्ततिक्षयान्मोक्षः । तस्मात्कल्याणानां सर्वेषां भाजनं विनयः ॥ ७४ ॥**

टीका—योगनिरोधस्य फलं जन्मजरामरणप्रबन्धलक्षणाया नरकादिभवसन्ततेरात्यन्तिकः क्षयः । जन्मादिसन्ततिक्षयाच्च मोक्षावाप्तिः । ऐकान्तिकात्यन्तिकादिगुणयुक्तं स्वात्मन्यवस्थानं मोक्षः । तस्मात्पारंपर्यद्वारेण सर्वकल्याणानां भाज-

---

अव०—तपसोऽनशनादेर्बलं सामर्थ्यं संवरफलं निर्जरा कर्मपरिसाटिः ॥ ७३ ॥ योगनिरोधः शैलेशीप्राप्तिरूपः अतो विनय एव कार्यः ॥ ७४ ॥

नमाश्रयो विनयः सर्वगुणरूपो (सर्वकल्याणरूपो) मोक्षः । अथवा गुरुशुश्रूषादि कल्याणं यावदयोगित्वं जवसन्ततिक्षयश्च । सर्वाण्येतानि कल्याणानि । एषां फलं मोक्ष इति ॥ ७४ ॥

ये पुनरविनीतास्तेषां कः फलविपाक इत्याह—

**विनयव्यपेतमनसो गुरुविद्वत्साधुपरिभवनशीलाः । त्रुटिमात्रविषयसंगादजरामरवन्निरुद्विग्नाः ॥७५॥**

टीका—उक्तलक्षणो विनयः तस्माद्व्यपेतं विगतं मनो येषां विनयव्यपेतमनसः । गुरूणामाचार्यादीनां । विद्वांसोऽन्येऽपि चतुर्दशपूर्वाद्यर्थज्ञाः ज्ञानादिसाधनत्रयेण मोक्षमभिलषन्तः । साधयन्तः साधवः । येषां (एषां) परिभवोऽनादरो वन्दनाभ्युत्थानादिप्रतिपत्तेरकरणं । तदेव च शीलं स्वभावो येषां । त्रुटिरनन्तपरमाणुसंहतिलक्षणोऽल्पकः सवितृकिरणप्रकाशितवातायनादिषु भ्रमन् दृश्यते । तन्मात्रो विषयसंगः स्वल्पको निःसारः शब्दादिविषयेषु यः संगस्तस्मादासक्तेः प्रत्यवायमागामिनमचेतयन्तः । अजरामरवन्निरुद्विग्नाः । जरा च मरश्च जरामरौ । अविद्यमानो जरामरौ यस्यासावजरामरस्तद्वन्निरुद्विग्नाः निर्भया मुक्ता एव अजरामराः सर्वसंगनिर्मुक्तास्तद्वदात्मानं मन्यते, नाहं जरां प्राप्स्यामि न च मरणं, स्वल्पकविषयसुखासक्तत्वादिति ॥ ७५ ॥

---

अव०—विनयाद्व्यपेत विगतं मनो येषां ते । त्रुटिमात्रमणुमात्रप्रायं विषयः शब्दादिस्तत्संगादजरामरवत् सिद्धवन्निरुद्विग्ना निर्भयाः ॥

एतदेव प्रत्यवायादिदिदर्शयिषया स्पष्टतरमभिधत्ते—

**केचित्सातर्द्धिरसातिगौरवात्सांप्रतेक्षिणः पुरुषाः । मोहात्समुद्रवायसवदामिषपरा विनश्यन्ति ॥७६॥**

टीका—केचिदेवाविदितपरमार्थाः । सातं सुखं सद्वेदनीयं । ऋद्धिर्विभवः कनकरजतपद्मरागेन्द्रनीलमरकतादिमणिसंपत् गोमहिष्यजाविककरितुरगरथादिसंपच्च । रसास्तिक्तकटुकषायाम्लमधुरलवणाख्याः । एतेषु सातादिषु गौरवमादरः सुखार्थः संपदर्थः इष्टरसाभ्यवहारार्थश्चादरः । अतीव सुष्ठु गौरवं । अतिगौरवाद्धेतोः । सांप्रतमेव वर्तमानकालमेवेक्षन्ते नागामिनं । त एवंविधाः पुरुषा मोहादज्ञानात् मोहकर्मोदयाद्वा । समुद्रवायसवदामिषपरा विनश्यन्ति । मृतकरिकलेवरापानप्रविष्ट-मांसास्वादगृद्धकाकवत् । जलधिमध्यमध्यास्यमाने कलेवरे विनिर्गत्य तेनैवापानमार्गेण सकलं दिग्मंडलमवलोक्य विश्रा-न्तिस्थानमपश्यन् निलीयमानश्च पयसि निधनमुपगतः । आमिषपरा इति रसगौरवस्यैव प्रत्यवायबहुलतां दर्शयामास प्र-करणकारः । न तथा सातर्द्धिगौरवे बहुप्रत्यपाये यथा रसगौरवे मद्यमांसकुणपादिषु प्रवृत्तिः प्राणवधमन्तरेण दुस्संपाद्या॥७६॥

**ते जात्यहेतुदृष्टान्तसिद्धमविरुद्धमजरमभयकरम् । सर्वज्ञवाग्रसायनमुपनीतं नाभिनन्दन्ति ॥ ७७ ॥**

---

अव०—ऐहिकसुखमानिनः रसलांपट्यं सातं सुखं ऋद्धिर्विभवो रसा मधुरत्वादयः, एतेषु गौरवं रसलांपट्यं तस्माद्धेतोर्वर्तमानसुख-दर्शिनः अतीवानुकूलविषयोपभोगपराः ॥ ७६ ॥ जात्या अवितथा हेतवो दृष्टान्ताश्चरितकल्पितोदाहरणानि तैः प्रसिद्धं, अजरमपरापरप्रदा-नेऽप्यक्षीणं उपनीतं दीयमानं तेनैव बहुमन्यन्ते रसायनमपि अविरुद्धं नित्यानित्ययोरेकत्र वस्तुनि सहावस्थानेऽपि विरोधरहितत्वं न कस्यापि भयं करोतीत्यभयकरं क्षुद्रोपद्रवनाशि ॥ ७७ ॥

टीका—त एवं सुखर्द्धिरसगौरवेषु सक्ता जात्या हेतवः स्वाभाविकाः तथ्याः । उत्पत्तिः स्थितिर्व्ययश्च । यदस्ति तदुत्पद्यतेऽवतिष्ठते विनश्यति च । तस्मादुत्पत्तिमत्त्वात्स्थितिमत्त्वाद्विनष्ट(नाशि)त्वाच्च सर्वे पदार्था नित्याश्चानित्याश्चेति सप्तभंगीमन्तो भवन्ति । दृष्टान्ताश्चांगुल्यादयः । यथैकस्मिन्नेव कालेऽङ्गुली मूर्तत्वेनावस्थिता वक्रत्वेन विनष्टा ऋजुत्वेनोत्पन्ना उत्पादस्थितिव्ययवती । तथात्मादयः सर्वे पदार्था जात्यहेतुभिर्दृष्टान्तैश्च सिद्धं प्रतिष्ठितमव्याहतं । अविरुद्धमिति न खलु नित्यानित्ययोर्विरोधोऽस्ति । द्रव्यार्थतया नित्यत्वमन्वयं समंगीकृत्य घटपटकपालादिषु सर्वत्राविशिष्टात् मृदिति प्रत्ययः । पर्यायास्तु घटकपालादयः पर्यायनयाङ्गीकरणात्तैरनित्यत्वं । भिन्ननिमित्तत्वाच्च न सहावस्थानलक्षणो विरोधोऽस्ति। तस्मादविरुद्धं । सर्वज्ञवाग्रसायनं सर्वज्ञवाग् द्वादशांगं प्रवचनं तदेव रसायनं । यथा रसायनमुपभुज्यमानं निरुजं वपुः करोति वलीपलितवर्जितं, तथा भगवद्वचनमप्युपयुज्यमानं विधिना सकलरुजापहारि भवति जन्ममरणप्रपञ्चनिरासश्चेति । अविद्यमाना जरा यत्र तदजरं विगतशरीरत्वाद्भयमपि मरणादिकमत एव तत्र नास्ति । जरामरणाभावत्वादजरमभयकरमित्युक्तं । उपनीतं ढौकितमर्पितं वा नाभिनन्दन्ति न परितुष्टास्तदुपयोगं कुर्वन्तीति ॥ ७७ ॥

एतमेवार्थं दृष्टान्तेन समर्थयति—

**यद्वत्कश्चित्क्षीरं मधुशर्करया सुसंस्कृतं हृद्यम् । पित्तार्दितेन्द्रियत्वाद्वितथमतिर्मन्यते कटुकम् ॥७८॥**

अव०—प्रकुपितपित्तधातुत्वाद्विपरीतबुद्धिस्तस्य क्षीरं कटुकं भवति ॥ ७८ ॥

टीका—कश्चिदिति पित्तबहुलः प्रकुपितपित्तधातुः। क्षीरं गोमहिष्यादीनां स्वभावेनैव स्वादु, किं पुनर्मधुरशर्करया युतं। सुसंस्कृतमिति सुक्वथितं निरुपहतभाजनस्थं। हृद्यं हृदयेष्टं। पित्तार्दितत्वादिति पित्तेनार्दितो व्याप्तः पित्तोदयेनाकुलीकृतान्तःकरणः। वितथमतिर्विपरीतबुद्धिर्मन्यतेऽवगच्छति। कटुकमिति मधुरमपि सदिति ॥ ७८ ॥

संप्रति दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकुर्वन्नाह—

**तद्वन्निश्चयमधुरमनुकंपया सद्भिरभिहितं पथ्यम्। तथ्यमवमन्यमाना रागद्वेषोदयोद्वृत्ताः ॥ ७९ ॥**

टीका—यद्यपि सुदुःसहपरिषहेन्द्रियनिरोधसंपातादादौ कटुकं तथापि निश्चयं पर्यन्तकाले मधुरमनेककल्याणयोगाद्रमणीयं। अनुकंपया सद्भिरतिशयप्राप्तैर्गणधरादिभिरभिहितं भव्यसत्त्वानामनुग्रहाय। पथ्यं च स्फुटमविसंवादि। तदवमन्यमाना अनाद्रियमाणा निराकरणबुद्ध्या। रागद्वेषोदयेन उद्वृत्ताः स्वच्छन्दचारिणो न हितोपदेशश्राविण इति ॥ ७९ ॥

एवमुद्वृत्ताः किमाचरन्तीत्याह—

**जातिकुलरूपबललाभबुद्धिवाल्लभ्यकश्रुतमदान्धाः। क्लीवाः परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥८०॥**

---

अव०—यदपि सुदुःसहपरिषहेन्द्रियनिरोधसंभवत्संतापादादौ कटुकं तथापि निश्चयं पर्यन्तकाले मधुरमनेककल्याणयोगाद्रमणीयं भव्यसत्त्वानुग्रहाय गणधरादिभिरभिहितं पथ्यं हितं। उद्वृत्ताः स्वच्छन्दचारिणः ॥ ७९ ॥ जातिर्मात्रान्वयः, कुलं पितृसमुद्भवं, रूपं प्रतीतं, बलं शारीरः प्राणः, लाभः प्रार्थितार्थप्राप्तिः, बुद्धिरौत्पत्तिक्यादिः, वाल्लभ्यकं प्रियत्वं, श्रुतमागमः, क्लीवा असत्त्वाः ॥ ८० ॥

टीका—जातिर्मात्रन्वयः । कुलं पित्रन्वयः । रूपं शरीरावयवसन्निवेशविशेषः । बलं शारीरं स्वजनबलं द्रव्यबलं चेति । लाभो यथाप्रार्थितप्राप्तिः । बुद्धिश्चतुर्विधा औत्पत्तिक्यादिः । वाल्लभ्यकं लोकस्य प्रियपिंडकत्वं । श्रुतमागमः शास्त्रपरिज्ञानं । एतदेव जात्यादिश्रुतांतं मदहेतुत्वात् मदो गर्वः तेनान्धाः । यथान्धाश्चक्षुर्विकला न किंचित् प्रेक्षणीयं पश्यन्ति, तथा जात्यादिगर्वाष्टकान्धा हिताहितविचारणारहिताः । क्लीबा विषयगृद्धा द्रमका इवातृप्ताः । तन्मात्रपरितोषादिहपरलोकहितं न पश्यन्ति न कुर्वन्ति चेति ॥ ८० ॥

संसारे परिभ्रमतां सत्त्वानां स्वकर्मोदयात्कदाचिद्ब्राह्मणजातिः कदाचिच्चाण्डालजातिः कदाचित्क्षत्रियादिजातयः, न नित्यैकैव जातिर्भवतीति दर्शयन्नाह—

**ज्ञात्वा भवपरिवर्ते जातीनां कोटिशतसहस्रेषु । हीनोत्तममध्यत्वं को जातिमदं बुधः कुर्यात् ॥ ८१ ॥**

टीका—भवो नारकादिजन्म तस्य परिवर्तः परिभ्रमणं नारको भूत्वा तिर्यग्योनौ मनुष्यजातौ वा जायते स्वकर्मवशात् । भूयश्चैकद्वित्रिचतुःपञ्चेन्द्रियजातावुत्पद्यते । तत्रैकेन्द्रियाणां स्वस्थाने शर्करावालुकादिभेदा बहवः । एवमप्तेजोवायुवनस्पतीनामपि यावन्त्यश्च योनयस्तावन्त्येव जातिशतसहस्राणि । तथा देवानामपीति । अत एव चतुरशीतियोनिलक्षः संसारः । स चोत्पद्यमानो हीनोत्तममध्यमेषु कुलेषु जन्म लभते । एवंविधं वाऽसमञ्जसं संसारमवगम्य ज्ञात्वा । को नाम विद्वान् जातिमदमालंबेत ? ॥ ८१ ॥

---

अव०—भवभ्रमणे ज्ञात्वा को नाम विद्वान् जातिमदमालंबेत् ॥ ८१ ॥

एतदेव स्फुटतरमाचष्टे—

**नैकान् जातिविशेषानिन्द्रियनिर्वृत्तिपूर्वकान् सत्त्वाः। कर्मवशाद्गच्छन्त्यत्र कस्य का शाश्वता जातिः ॥८२॥**

टीका—जातिविशेषाननेकसंख्यानिन्द्रियनिर्वृत्तिपूर्वकान्। इन्द्रियनिर्वृत्तिः पूर्वं कारणं येषां जातिविशेषाणां। एकस्मिन्निन्द्रिये स्पर्शनाख्ये निर्वृत्ते एकेन्द्रियजातिः। स्पर्शनरसनतो द्वीन्द्रियजातिः। स्पर्शनरसनघ्राणनिर्वृत्तौ त्रीन्द्रियजातिः। स्पर्शनरसनघ्राणचक्षुर्निर्वृत्तौ चतुरिन्द्रियजातिः। स्पर्शनरसनघ्राणचक्षुःश्रोत्रनिर्वृत्तौ पञ्चेन्द्रियजातिः। स्वकर्मवशाद्गच्छन्ति अत्र कस्य का शाश्वता जातिः। तस्मान्न युक्तो जातिमदः ॥ ८२ ॥

कुलमदव्युदासार्थमाह—

**रूपबलश्रुतमतिशीलविभवपरिवर्जितांस्तथा दृष्ट्वा। विपुलकुलोत्पन्नानपि ननु कुलमानः परित्याज्यः ८३॥**

टीका—पित्रन्वयः कुलं। तच्च विस्तीर्णं लोकख्यातं। तत्र चोत्पन्नो रूपपरिहीणकः पुरुषो योषिद्वा विरूपा यस्यावयवा गंरुवाः कुब्जवामनादयः। बलं शारीरं तेन परिहीणः सर्वस्य परिभूतः। श्रुतेन परिहीणोऽत्यन्तमूर्खः निकृष्टो मातृकामपि न जानाति। मतिर्बुद्धिः सापि हिताहितप्राप्तिपरिहारक्षमा नास्तीत्येतया परिहीणकः। शीलं सदाचारता द्यूतपर-

---

अव०—अनेकान् जातिविशेषान् जन्मोत्पादान् इन्द्रियनिर्वृत्तिरिन्द्रियनिष्पत्तिः पूर्वकारणं येषाम् ॥ ८२ ॥ शीलमाचारः, शेषाणि प्रतीतानि, ननु नियमेनैव ॥ ८३ ॥

दारानृतत्त्वापणतस्करत्वनिष्ठुरत्वादिपरित्यागलक्षणं । विभवो धनधान्यकनकरजतादिसंपत् । विपुलेषु कुलेषूत्पन्नानपि जीवान् विरूपादिकानवलोक्य । ननु नियमेनैव कुलमानो गर्वः परिहर्तव्यः । गर्वावकाशाभावादेव ॥ ८३ ॥

अपि च—

**यस्याशुद्धं शीलं प्रयोजनं तस्य किं कुलमदेन । स्वगुणालंकृतस्य हि किं शीलवतः कुलमदेन ॥ ८४ ॥**

टीका—शीलमेव यस्योपहतमसदाचारानुष्ठानात् । तस्मात् त्याज्य एव कुलमदः, प्रयोजनाभावात् । शुद्धे तु शीले भवतु नाम गर्वः । दुःशीलस्य हि गर्वो दौःशीलमेव संवर्धयति । स्वगुणा रूपबलश्रुतबुद्धिविभवादयो यस्य सन्ति, स तैरेवालंकृतोऽतः शीलवतोऽपि न किंचित् कुलमदेनेति फल्गुः कुलमद इति परिहार्यः ॥ ८४ ॥

रूपमदोऽपि न कार्य इति दर्शयति—

**कः शुक्रशोणितसमुद्भवस्य सततं चयापचयिकस्य । रोगजरापाश्रयिणो मदावकाशोऽस्ति रूपस्य ॥८५॥**

टीका—शुक्रं पित्रा निसृष्टं वीर्यं । शोणितं मातुर्योनौ स्फुटितस्फोटकश्च्युतं । एतस्माद्द्वयात् समुद्भवस्य शरीरस्य । बीजबिन्दोराधानात्प्रभृति कललार्बुदमांसपेश्याद्याकारेणोपचयं गच्छन् गर्भः शिरोग्रीवाबाहूरःस्थलोदरादिभावेन वर्धते, रसह-

---

अव०—रूपबलश्रुतबुद्धिविभवादयो गुणास्तैरलंकृतस्य सुशीलस्य कुलमदेन प्रयोजनं कार्यं न विद्यते ॥ ८४ ॥ चयो वृद्धिरपचयो हानिस्तौ यस्य । रोगजरापाश्रयिणो रोगजराधारस्य एवं शुक्रादिसंपर्कनिष्पन्ने देहे को मदावकाशोऽस्ति ? अपि तु नास्त्येव ॥ ८५ ॥

रिण्या च जनन्यन्यहृताहाररसोपयोगात् संपूर्णाङ्गावयवो नवमे मासि दशमे वा मातुरुदरान्निर्गच्छति । ततोऽपि स्तनक्षीरपीतकान्यवहारात् कुमारयौवनमध्यमस्थविरावस्थाभिः शरीरं चयापचययुक्तं । पथ्येष्टाहारपरिणतेरुपचयो वृद्धिः, अपथ्यानिष्टान्नपानोपयोगादपचयो हानिः । तौ चयापचयौ यस्य तच्चयापचयिकं । निरुजस्य वा उपचयः, मान्द्यादिभिरपचयः । रोगा ज्वरातीसारकाशश्वासादयः । जरा पूर्वावस्थात्यागेनोत्तरावस्थावस्कन्दनं यावदत्यन्तस्थविरावस्थेति । रोगजरयोरपाश्रयि स्थानं शरीरकमाश्रयः । एवं शुक्रादिसंपर्कनिष्पन्ने देहे को मदावकाशः किं गर्वबीजं रूपस्येति ॥ ८५॥

**नित्यं परिशीलनीये त्वग्मांसाच्छादिते कलुषपूर्णे। निश्चयविनाशधर्मिणि रूपे मदकारणं किं स्यात्॥८६॥**

टीका–नित्यमिति सर्वदा । परिशीलनीयं संस्कर्तव्यं यस्मान्नवभिः श्रोत्रद्वारैः सदैवान्तर्गतं मलं दूषिकासिंघाननिष्ठ्यूतलालारेतोमूत्रपुरीषस्वेदाद्युद्वमति शरीरकं । तदपनयनसंमार्जनादि प्रतिक्षणमयमाचरति अनिर्विण्णो रूपवान् । त्वचा चर्मणासृजाऽवता मांसेन च आच्छादिते स्थगिते । कलुषं मूत्रपुरीषरुधिरमेदोमज्जास्थिस्नायुप्रभृति तेन पूर्णे व्याप्ते । विनाशधर्मो यस्यास्ति तद्विनाशधर्मिणि निश्चयेनावश्यंतयाऽभ्यंगोद्वर्तनस्नानानुलेपनप्रतिविशिष्टान्नपानलालितमपि विनश्यति पर्यन्ते कृम्यादिपुञ्जो वा भस्मादिराशिर्वा शुष्कचर्मास्थिकलेवरप्रायं वा भवति । एवंविधे च रूपे किं पुनर्भवेत् मदकारणं, येन माद्यन्ति निर्विवेका रूपभाजः ॥ ८६ ॥

---

अव०–सर्वदा संस्कर्तव्ये चर्मण्यसृजाऽवता स्थगिते । कलुषं मूत्रपुरीषरुधिरमेदोमज्जास्नायुप्रभृति तेन व्याप्ते । निश्चयेन विनाशधर्मो यस्यास्ति ॥ ८६ ॥

**बलसमुदितोऽपि यस्मान्नरः क्षणेन विबलत्वमुपयाति। बलहीनोऽपि च बलवान् संस्कारवशात्पुनर्भवति॥८७**

टीका—बलेन शारीरेण समुदितः संपन्नो नरो बलवानपि यस्मात्क्षणेन स्वल्पेनैव कालेनातितीव्रज्वरविशूचिकावेदनार्तः सन् विगतबलो भवति। बलहीनोऽपि दुर्बलः सन्नपि धृतिमान् प्रणीतरसान्यवहारसंस्कारवशादाश्वेव बलसंपन्नो जायते। संस्कारो वा कर्मविपाकस्तद्वशाद्वीर्यान्तरायक्षयोपशमविशेषादित्यर्थः ॥ ८७ ॥

**तस्मादनियतभावं बलस्य सम्यग्विभाव्य बुद्धिबलात्। मृत्युबले चाबलतां मदं न कुर्याद्बलेनापि ॥ ८८॥**

टीका—अनियतो भावः सत्ता यस्य कदाचिद्भवति कदाचिन्न भवतीति। बलमुक्तेन न्यायेनेति। सम्यग्विभाव्य विज्ञाय यथावत्। कथं पुनरभावो बलस्येत्याह—बुद्ध्यगम्यमेतदिति प्रतिपादयति। मृत्युबले चोपतिष्ठमाने न शरीरबलं न स्वजनबलं न द्रव्यबलं क्रमते प्रतिक्रियायै। अतो मदं न कुर्यात्। सम्यग्विभावितत्वादसमर्थो बलेनापि ॥ ८८ ॥

**क्षयोपशमनिमित्तौ लाभालाभावनित्यकौ मत्वा। नालाभे वैक्लव्यं न च लाभे विस्मयः कार्यः ॥८९॥**

---

अव०—अतितीव्रज्वरशूलविसूचिकादिवेदनार्त्तः सन् तरुणबलोऽपि क्षणेन विगतबलत्वमुपैति । सुसंस्कारात्प्रणीताहाराभ्यवहाराद्रसायनदेवताराधनसामर्थ्याद्वीर्यान्तरायकर्मक्षयोपशमाद्वेति ॥ ८७ ॥ अनियतो भावः सत्ता यस्य कदाचिद्भवति कदाचिन्न भवति विज्ञाय मरणबले प्राप्ते शरीरबलं द्रविणबलं च न क्रमते प्रतिक्रियायै ॥ ८८ ॥ क्षयोपशमाल्लाभो भवति, लाभान्तरायकर्मोदयाच्च न लभते किंचित्, नित्यानित्यौ दीनतागर्वौ ॥ ८९ ॥

टीका–लाभान्तरायकर्मणः क्षयोपशमाल्लाभो भवति भक्तपानवस्त्रप्रतिश्रयपीठफलकादि ( देः ), लाभान्तरायकर्मोदयाच्च न लभते किंचिदपि । अतो नास्ति नित्यो लाभो नाप्यलाभः । नित्यानित्यौ च लाभालाभौ विज्ञाय नालाभे वैक्लव्यं दीनता कार्या, नापि लाभे सति विस्मयो गर्वः कार्यः । यदि लभ्यते ततो धर्मसाधनं शरीरकमाद्यं दशविधचक्रवालसामाचारीसमर्थं भविष्यति, न चेल्लब्धं तथाप्यदीनचेतसः साधोर्निर्जराभाक्त्वं भविष्यति । कर्मोदयक्षयोपशमजनितः खल्वयं भावो न स्वतो लाभालाभलक्षण इति ॥ ८९ ॥

**परशक्त्यभिप्रसादात्मकेन किंचिदुपभोगयोग्येन । विपुलेनापि यतिवृषा लाभेन मदं न गच्छन्ति ॥ ९० ॥**

टीका–परो दाता गृहस्थादिः तस्य दानान्तरायक्षयोपशमजनिता शक्तिः स्वशक्त्यनुरूपं ददाति । अभिप्रसादात्मकेनेति दातुर्यद्यभिप्रसन्नं चेतो भवति साधुं प्रति मुक्तिसाधनप्रवृत्तोऽयं तपस्वी निःसंगः समारंभादिषु पात्रभूतोऽस्मै दत्तं बहुफलं भवति एवं लाभः परप्रसादात्मकः । सर्वमपि तदन्नादि किंचिदेवोपभोगान्तरं साधयति, न पुनराजीवितावधेस्तृप्तिं करोति । एवं वस्त्रादेरप्यनित्यत्वात् किंचिदुपभोगयोग्यत्वं । एवंविधेन लाभेन यतिवृषा यतिप्रधानभूताः । विपुलेन किं बहुना न मनागपि मदमुद्वहन्ति ॥ ९० ॥

---

अव०–परो दाता गृहस्थादिस्तस्य दानान्तरायक्षयोपशमोत्था शक्तिः स्वशक्त्यनुरूपं ददाति । दातुर्यदि चेतःप्रसन्नता भवति, साधुं प्रति गुणानुरागः उपयोगः वस्त्राहारादिना ॥ ९० ॥

ग्रहणोद्ग्राहणनवकृतिविचारणार्थावधारणाद्येषु । बुद्ध्यंगविधिविकल्पेष्वनन्तपर्यायवृद्धेषु ॥ ९१ ॥

टीका—अपूर्वसूत्रार्थयोर्ग्रहणसमर्था बुद्धिगृहीतं सूत्रं ( ग्रहणा तत्र ) समर्थो वोद्ग्राह्योऽन्यस्मै प्रतिपाद्यसुबुद्धिविशे-
षेण । नवकृतिरिति नवमभिनवं स्वयमेव प्रकरणाध्यायोपनिबन्धनादि करोति । विचारणा नाम सूक्ष्मेषु पदार्थेष्वात्मकर्म-
बन्धमोक्षादिषु युक्त्यनुसारिणी जिज्ञासा, आचार्योपाध्यायादिवचनविनिर्गतस्य शब्दार्थस्य सकृदेव ग्रहणं न द्विस्त्रिर्वा ।
एवमाद्येष्वित्यादिशब्दाद्धारणा परिगृह्यते । बुद्धेरंगानि शुश्रूषाप्रतिप्रश्नग्रहणादीनि । तेषां विधिर्विधानमागमेन प्रति
पादनं । तस्य विधेर्विकल्पाः परस्परमनन्तैः पर्यायैर्वृद्धाः सर्वपर्यायाः सर्वद्रव्यविषयत्वात् मतिश्रुतयोः समस्तरू-
पिद्रव्यनिबन्धनत्वाच्चावधेस्तदनन्तभागवर्तिरूपिद्रव्यनिबन्धनत्वाच्च मनःपर्यायस्य बुद्धेरित्येवं बुद्ध्यंगविधिविकल्पेष्वनन्त-
पर्यायवृद्धेषु सत्सु ॥ ९१ ॥

---

अव०—ग्रहणं बहूनामपि पृथक् पृथग्वदतामपि पृथक् पृथक् शब्दोपलब्धिः, उद्ग्राहणं संस्कृतगद्यपद्यशब्दार्थाभिधानं, परस्मै इति शेषः, नवकृतयोऽभिनवं स्वयमेवप्रकरणाध्ययनादिक करोति, विचारणा सूक्ष्मेषु पदार्थेष्वात्मकर्मबन्धमोक्षादिषु युक्त्यनुसारिणीजिज्ञासादि, अर्थावधारणमाचार्यादिवचनविनिर्गतस्य शब्दार्थस्य सकृदेव ग्रहणं, न द्वित्रिवारोच्चारणादिप्रयासः, आदिशब्दाद्धारणा परिगृह्यते । बुद्धेरंगानि शुश्रूषादीनि तेषां विधिर्विधानं आगमेन प्रतिपादनं तस्य विधेर्विकल्पास्तेषु कियत्सु अनन्तैः पर्यायैर्वृद्धास्ते क्षयोपशमजनितबुद्धिविशेषाः परस्परमनन्तैः पर्यायैर्वृद्धाः सर्वद्रव्यविषयत्वान्मतिश्रुतयोरित्येवं बुद्ध्यंगविकल्पेष्वनन्तभेदैर्वृद्धेषु सत्सु ॥ ९१ ॥

पूर्वपुरुषसिंहानां विज्ञानातिशयसागरानन्त्यम् । श्रुत्वा सांप्रतपुरुषाः कथं स्वबुद्ध्या मदं यान्ति॥ए२॥

टीका–पूर्वपुरुषा गणधरप्रभृतयश्चतुर्दशपूर्वधरादयो यावदेकादशांगविदवसानाः । सिंहा इव सिंहाः । शौर्येणोपमानं परीषहकषायेन्द्रियकुरंगाणां निहननात् पूर्वपुरुषसिंहाः । विज्ञानातिशयो विज्ञानप्रकर्षः स एव सागरः समुद्रो विस्तीर्णत्वात् । अनन्तस्य भाव आनन्त्यं बहुत्वमित्यर्थः । क्षयोपशमजज्ञानस्य प्रकर्षापकर्षत्वादनन्ता विज्ञानातिशयसागरा बहव इत्यर्थः । अथवा ज्ञाते सर्वश्रुतग्रन्थे वैक्रियतेजोलेश्याकाशगमनसंभिन्नश्रोत्रादयोऽतिशया बहुप्रकारास्त एव सागराः एकस्याप्यतिशयस्य दुरवगाहत्वात् तदेतत्पूर्वपुरुषसिंहानां श्रुत्वा सांप्रतपुरुषा दुःषमांशवर्तिनः कथं केन प्रकारेण स्वल्पया स्वधिषणया माद्यन्तीति ॥ ए२ ॥

द्रमकैरिव चाटुकर्मकमुपकारनिमित्तकं परजनस्य । कृत्वा यद्वाल्लभ्यकमवाप्यते को मदस्तेन ॥ ए३ ॥

टीका–रंकैरिव। चाटुशब्देन समानार्थश्चटुशब्दोऽपि विद्यते । बहुलवचनाद्वा उकारः प्रत्ययो भवति। चटुकर्मैव चटुकर्मकं। अनुवृत्तिस्तत्प्रयोजनानुष्ठानं तद्गुणप्रशंसाविष्टरादिदानमित्येवं कुर्वाणो लोकस्य वल्लभो भवति। आचार्यादीनामागमोदितम-

---

अव०–पूर्वपुरुषा गणधरप्रभृतयश्चतुर्दशपूर्वधरादयो यावदेकादशांगविदवसानाः, सिंहा इव सिंहाः, परीषहकषायकुरंगप्रतिहननात् तेषां विज्ञानातिशयः विज्ञानप्रकर्षः स एव सागरः समुद्रो विस्तीर्णबहुत्वात्, अनन्तस्य भाव आनन्त्यं श्रुत्वा विभाव्य सांप्रता वार्तमानिकाः ॥९२॥ कुत्सितं प्रियं भाषणं चटुकर्म, उपकारो निमित्तं यस्य चटुकर्मणः निमित्तं मातापितृसंबन्धादिकं कृत्वा ॥ ९३ ॥

ऽभ्युत्थानादि क्रियमाणं चटुकर्म न दोषमावहति । उपकारो निमित्तं यस्य चटुकर्मणः । तदुपकारनिमित्तकं उपकारोऽनेन प्रागमम कृतः करिष्यते वाऽतश्चटुकर्म करोति । परजनस्येति गृहस्थादिसूचनं । तच्चटुकर्म कृत्वा यदवाप्यते वाल्लभ्यकं । को मदस्तेनेति श्वेवावलेहनादिदायिनः पुरः स्थित्वा श्रवणपुच्छचालनादि कृतोपकारस्य यद्वाल्लभ्यकमवाप्नोति किं तत्र चित्रमिति ॥ ९३ ॥

गर्वं परप्रसादात्मकेन वाल्लभ्यकेन यः कुर्यात् । तद्वाल्लभ्यकविगमे शोकसमुदयः परामृशति ॥ ९४ ॥

टीका—गर्वोऽभिमानो बहुजनवल्लभोऽहमिति परप्रसादेन जनितः । परो हि चटुकर्मकारिणः परितुष्टः कंचित्प्रसादं करोति वस्त्रान्नपानादिकं । तावन्मात्रेण च गर्वितो भवति । तं चटुकर्मकारिणं । वाल्लभ्यकविगमे विगते वल्लभत्वे द्वेष्यत्वे जाते । शोकसमुदयः परामृशति लुपति । तथानुवर्तितोऽयमेकपद एव निःस्नेहो जातः । यावन्ति चटुकर्माणि कृतानि तावन्त एव शोकाः शोकसमुदयस्तेन स्पृश्यते । शोकश्चित्तपीडाविशेषः ॥ ९४ ॥

माषतुषोपाख्यानं श्रुतपर्यायप्ररूपणां चैवम् । श्रुत्वातिविस्मयकरं विकरणं स्थूलभद्रमुनेः ॥ ९५ ॥

टीका—स्वल्पेनापि श्रुतेन भावतो गृहीतेन जडमतिनापि निर्वाणं साध्यते । स ह्यसमर्थो बहुमागममध्येतुं करणजड-

अव०—परजनप्रसन्नताजनितेन तेन स्पृश्यते ॥ ९४ ॥ श्रुतपर्याया भेदा अनन्तगुणादयोऽसंख्यभवपरिच्छेदाः उपर्युपरि पश्यतः सर्वं दरिद्रमिति विदित्वा त्रिकरणं विक्रियां कृतशेषश्रुतदाननिषेधमिति शेषः वैक्रियसिंहरूपनिर्माणं ॥ ९५ ॥

त्वात् मेधाधारणाविरहाच्च । तस्यैवंविधस्य गुरुभिरनुकंपया पदद्वयमर्पितं "मा रूस मा तूसेति" रागद्वेषनिग्रहगर्भं । तस्य तद्घोषयतः करणवैकल्यादन्यथा स्थिरीभूतं "मापतुषेति" । श्रूयते च तस्य निर्वाणावाप्तिः । तस्माद्बह्वधीतं मयाऽर्थश्च परिज्ञायत इति निष्कारणो गर्वः । श्रुतपर्यायप्ररूपणा चैवं श्रुतमागमस्तस्य पर्याया भेदाः । कश्चिदेकार्थव्याख्याकारी, कश्चिदर्थद्वयभाषी, तथाऽपरो बह्वर्थाख्यायी एकस्यैव सूत्रस्येति । श्रुतपर्यायं चाकर्ण्य । अतिविस्मयकरं च विकरणं वैक्रियसिंहरूपनिर्माणं स्थूलभद्रमहर्षेर्जामिश्रा (यक्षाद्या) (जामिका) र्यिकाणां दर्शनाय आगमाभियोगजनितलब्धिविकरणं श्रुतसंप्रदायविच्छेदं च तस्य श्रुत्वा को नामैहिकोपायभ्रान्त्यापि श्रुतमदं कुर्यादिति ॥ ए५ ॥

**संपर्कोद्यमसुलभं चरणकरणसाधकं श्रुतज्ञानम् । लब्ध्वा सर्वमदहरं तेनैव मदः कथं कार्यः ॥ ए६ ॥**

टीका—आगमज्ञैर्बहुश्रुतैराचार्यादिभिः सह संपर्कः संसर्गः । उद्यम उत्साहोऽध्येतव्यार्थश्रवणे च । संपर्कोद्यमाभ्यां सुलभमनायासेन प्राप्यं चरणं मूलगुणाः, करणमुत्तरगुणास्तेषां साधकं निष्पादकं । श्रुतज्ञानं लब्ध्वा समासाद्य । सर्वेषां जात्यादिमदानामपनयनकारि भूयः तेनैव कथं मदमादधीतात्मनि । न हि विषापहारिप्रयुज्यमानमगदं विषवृद्धिं करोतीति ॥ ए६ ॥

**एतेषु मदस्थानेषु निश्चये न च गुणोऽस्ति कश्चिदपि । केवलमुन्मादः स्वहृदयस्य संसारवृद्धिश्च ॥ ए७ ॥**

---

अव०—संपर्कश्च संसर्ग आचार्यादिबहुश्रुतैः सह उद्यमश्च प्रोत्साहः मूलगुणा उत्तरगुणास्तेषां निष्पादकं श्रुतज्ञानं लब्ध्वा ॥ ९६ ॥

" ज्ञानं मददर्पहरं, माद्यति यस्तेन तस्य को वैद्यः । अमृतं यस्य विषायति तस्य चिकित्सा कथं क्रियते" ॥ ९७ ॥

टीका—जात्यादिष्वष्टासु मदस्थानेष्वेतेषु । निश्चये परमार्थविचारणायां पर्यवसाने वा न खलु कश्चिद्गुणो दृश्यते ऐहिक आमुष्मिको वा । यदि नाम जातिर्विशिष्टा ततः किं स्यात् हीना चेत्ततोऽपि किं ? केवलमुन्मादः स्वहृदयस्य यदि परमुन्मत्तता ग्रहाविष्टस्येव यत्किंचन प्रलापित्वं स्वहृदयस्येति । स्वचित्तपरिणामात् एतानि मदस्थानानि भवन्तीति । स्वहृदयपरिणामबहिर्वर्तिन्या वाक्कायचेष्टयाऽवगम्यते । ततश्च संसारवृद्धिर्जन्मजरामरणप्रबन्धः संसारस्तस्य वृद्धिः तद्दीर्घीकरणमिति ॥ ९७ ॥

**जात्यादिमदोन्मत्तः पिशाचवद्भवति दुःखितश्चेह । जात्यादिहीनतां परभवे च निःसंशयं लभते ॥ ९८ ॥**

टीका—जात्यादिनाऽष्टप्रकारेण मदेनोन्मत्तो हृत्पूरकभक्षणपित्तोदयाद्व्याकुलीकृतकरणपुरुषवत् पिशाचवद्वा भवति दुःखितश्चेह कश्चिच्छुचिपिशाचकोदकः जनाकीर्णं देशमुत्सृज्य समुद्रमध्यवर्तिनं द्वीपमनुप्रविष्टः । तत्र चैको वणिग्विभिन्नपोतः प्रथमतरं गतः । तत्र चेक्षुवाटाः प्रभूतास्तद्रसपानात् केवलाश्रुरुशकलानीव गुदमुखेन विसृष्टानि । पुरीषपरिणामान्तराणि तानि तथाऽवलोक्य स चोक्तपिशाचकश्चखाद स्वादूनि, तृप्तश्चास्ते प्रतिदिवसं । दृष्टश्च कालान्तरेण ह्रियमाणो वणिक् । ततश्चोद्विग्नस्तस्मादपि स्थानान्निर्गतोऽन्यं द्वीपं तत्रापि वल्गुल्यादिदूषितानि फलानि भुक्तवानेव यत्र यत्र याति तत्र तत्र दुःखभाक् । एवंविधश्च परभवेऽपि हीनजात्यादित्वेनोत्पद्यते इति न युक्तो जातिमदः ॥ ९८ ॥

---

अव०—जात्यादिमदमत्तः शुचिपिशाचाभिधानद्विज इव दुःखभाग्भवति ॥ ९८ ॥

**सर्वमदस्थानानां मूलोद्घातार्थिना सदा यतिना। आत्मगुणैरुत्कर्षः परपरिवादश्च संत्याज्यः ॥ ९९ ॥**

टीका—तस्मात्सर्वेषां जात्यादिमदस्थानानामष्टानामपि यन्मूलं बीजं गर्वाख्यं तदुद्घातो विनाशस्तदार्थिना मानकषायविजयार्थिना । सदा सर्वकालं । यतिना मोक्षसाधनप्रवृत्तेन प्रयत्नवता । आत्मगुणैर्जात्यादिभिरुत्कर्षो गर्वः । परेषां च परिवादोऽवर्णभाषणं परिभवः परित्यजनीय इति ॥ ९९ ॥

कस्मात्पुनः परपरिवादस्त्याज्यत इत्याह—

**परपरिभवपरिवादात्मोत्कर्षाच्च बध्यते कर्म । नीचैर्गोत्रं प्रतिभय(व)मनेकभवकोटिदुर्मोचम्॥ १०० ॥**

टीका—परस्य परिभवो न्यत्कारः किमनेन जात्यादिहीनेनेति । परिवादस्त्ववर्णभाषणं । एवं चैवं चायमकरणीयं करोति । आत्मनश्चोत्कर्षाज्जात्यादिभिरुत्कृष्टताख्यापनात् । बध्यते समादीयते कर्म नीचैर्गोत्राख्यं । यत्र यत्रोत्पद्यते तत्र तत्र हीनजातिषु म्लेच्छदासचाण्डालादिषु तदनुभवति । ततश्च कर्ममयत्वात्संसारस्य तत्कृतं संसारपरिभ्रमणं जन्मजरामरणप्रबन्धं । प्रतिभयमिति भयाभिमुखं सर्वत्र भीतियुक्तं । अथवा प्रतिभवं भवे भवे इत्यर्थः । भवानां जन्मनां कोटिः । अनेका चासौ भवकोटिश्चेति अनेकभवकोटिः । भवकोट्याऽनेकया दुर्मोचं दुर्मोक्षं नानुभवितुं शक्यमित्यर्थः । नामगोत्रयोर्विंशतिकोटिकोट्यः स्थितिरितिवचनात् ॥ १०० ॥

---

अव०—जात्यादीनां बीज ( द्विबीज ) विनाशोद्यतेन आत्मोत्कर्षः परदूषणोद्घोषणं च ॥ ९९ ॥ परतिरस्कारः, भवे भवे, कोटिरानन्त्यसूचकः ॥ १०० ॥

टीका–जात्यादिष्वष्टासु मदस्थानेष्वेतेषु । निश्चये परमार्थविचारणायां पर्यवसाने वा न खलु कश्चिद्गुणो दृश्यते ऐहिक आमुष्मिको वा । यदि नाम जातिर्विशिष्टा ततः किं स्यात् हीना चेत्ततोऽपि किं ? केवलमुन्मादः स्वहृदयस्य यदि परमुन्मत्तता ग्रहाविष्टस्येव यत्किंचन प्रलापित्वं स्वहृदयस्येति। स्वचित्तपरिणामात् एतानि मदस्थानानि भवन्तीति। स्वहृदयपरिणामबहिर्वर्तिन्या वाक्कायचेष्टयाऽवगम्यते । ततश्च संसारवृद्धिर्जन्मजरामरणप्रबन्धः संसारस्तस्य वृद्धिः तद्दीर्घीकरणमिति ॥ ए७ ॥

**जात्यादिमदोन्मत्तः पिशाचवद्भवति दुःखितश्चेह । जात्यादिहीनतां परभवे च निःसंशयं लभते॥ए८॥**

टीका–जात्यादिनाऽष्टप्रकारेण मदेनोन्मत्तो हृत्पूरकभक्षणपित्तोदयाक्षाकुलीकृतकरणपुरुषवत् पिशाचवद्भा भवति दुःखितश्चेह कश्चिच्छुचिपिशाचकोदकः जनाकीर्णं देशमुत्सृज्य समुद्रमध्यवर्तिनं द्वीपमनुप्रविष्टः । तत्र चैको वणिग्विभिन्नपोतः प्रथमतरं गतः । तत्र चेक्षुवाटाः प्रभूतास्तद्रसपानात् केवलाशुरूशकलानीव गुदमुखेन विसृष्टानि । पुरीषपरिणामान्तराणि तानि तथाऽवलोक्य स चोक्तपिशाचकश्चखाद स्वादूनि, तृप्तश्चास्ते प्रतिदिवसं । दृष्टश्च कालान्तरेण हिण्डमानो वणिक् । ततश्चोद्विग्नस्तस्मादपि स्थानान्निर्गतोऽन्यं द्वीपं तत्रापि वल्गुल्यादिदूपितानि फलानि भुक्तवानेव यत्र यत्र याति तत्र तत्र दुःखभाक् । एवंविधश्च परभवेऽपि हीनजात्यादित्वेनोत्पद्यते इति न युक्तो जातिमदः ॥ ए८ ॥

---

अव०–जात्यादिमदमत्तः शुचिपिशाचाभिधानद्विज इव दुःखभाग्भवति ॥ ९८ ॥

**सर्वमदस्थानानां मूलोद्घातार्थिना सदा यतिना। आत्मगुणैरुत्कर्षः परपरिवादश्च संत्याज्यः ॥ एए ॥**

टीका—तस्मात्सर्वेषां जात्यादिमदस्थानानामष्टानामपि यन्मूलं बीजं गर्वाख्यं तदुद्घातो विनाशस्तदार्थिना मानकषायविजयार्थिना । सदा सर्वकालं । यतिना मोक्षसाधनप्रवृत्तेन प्रयत्नवता । आत्मगुणैर्जात्यादिभिरुत्कर्षो गर्वः । परेषां च परिवादोऽवर्णभाषणं परिभवः परित्यजनीय इति ॥ एए ॥

कस्मात्पुनः परपरिवादस्त्याज्यत इत्याह—

**परपरिभवपरिवादात्मोत्कर्षाच्च बध्यते कर्म । नीचैर्गोत्रं प्रतिभय(व)मनेकभवकोटिदुर्मोचम्॥ १०० ॥**

टीका—परस्य परिभवो न्यत्कारः किमनेन जात्यादिहीनेनेति । परिवादस्त्ववर्णभाषणं । एवं चैवं चायमकरणीयं करोति । आत्मनश्चोत्कर्षाज्जात्यादिभिरुत्कृष्टताख्यापनात् । बध्यते समादीयते कर्म नीचैर्गोत्राख्यं । यत्र यत्रोत्पद्यते तत्र तत्र हीनजातिषु म्लेच्छदासचाण्डालादिषु तदनुभवति । ततश्च कर्ममयत्वात्संसारस्य तत्कृतं संसारपरिभ्रमणं जन्मजरामरणप्रबन्धं । प्रतिभयमिति भयाभिमुखं सर्वत्र भीतियुक्तं । अथवा प्रतिभवं भवे भवे इत्यर्थः । भवानां जन्मनां कोटिः । अनेका चासौ भवकोटिश्चेति अनेकभवकोटिः । भवकोट्याऽनेकया दुर्मोचं दुर्मोक्षं नानुभवितुं शक्यमित्यर्थः । नामगोत्रयोर्विंशतिकोटिकोट्यः स्थितिरितिवचनात् ॥ १०० ॥

---

अव०—जात्यादीनां बीज ( द्विबीज ) विनाशोद्यतेन आत्मोत्कर्षः परदूषणोद्घोषणं च ॥ ९९ ॥ परतिरस्कारः, भवे भवे, कोटिरानन्त्यसूचकः ॥ १०० ॥

कर्मोदयवशाच्च हीनादिजातिषु जन्म भवति नाकस्मादिति दर्शयति–

**कर्मोदयनिर्वृत्तं हीनोत्तममध्यमं मनुष्याणाम् । तद्विधमेव तिरश्चां योनिविशेषान्तरविभक्तम् ॥१०१॥**

टीका–कर्मशब्देन गोत्रमेवाभिसंबध्यते । हीनं नीचैर्गोत्रकर्मोदयात् । उत्तममुच्चैर्गोत्रकर्मोदयात् । मध्यमं व्यतिमिश्रकर्मोदयात् । मनुष्याणां तिरश्चां च त्रिविधमपि भवति "तद्विधमेव तिरश्चामिति" वचनात् । जघन्योत्तममध्यममित्यर्थः । योनिविशेषान्तरविभक्तमिति तिर्यग्योनिभेदेन मनुष्ययोनिभेदेन च विभक्तं कृतविभागं । विशेषास्तु तिरश्चामेकद्वित्रिचतुःपञ्चेन्द्रियाख्याः, मनुष्याणां संमूर्छिमगर्भजातिविशेषाः । अन्तरशब्दोऽन्यत्वप्रतिपादनार्थं इति कारिकाशतं विवृतम् ॥ १०१ ॥

एवमुक्तेन न्यायेन हीनादिजन्मप्रतिपत्तिः कर्मोदयजनितेति महद्वैराग्यकारणं, तथेदमपरं वैराग्यस्य निमित्तमाख्याति–

**देशकुलदेहविज्ञानायुर्बलभोगभूतिवैषम्यम् । दृष्ट्वा कथमिह विदुषां भवसंसारे रतिर्भवति ॥ १०२ ॥**

टीका–देशो मगधाङ्गकलिङ्गादिरार्यः, शकयवनकिरातादिरनार्यः । कुलमिक्ष्वाकुहरिवंशादिकं । सल्लक्षणावयवसन्निवे-

---

अव०–कर्मशब्देन गोत्रमेव तद्रूपमेव योनिविशेषाश्चतुरशीतिलक्षाः तदन्तरैः कृतविभागम् ॥ १०१ ॥ देशादीनां समृद्धिपर्यन्तानां विषमतां विलोक्य भवसंसरणे ॥ १०२ ॥

१ ज्ञायतेऽनेनैकस्या आर्यायाः प्रक्षिप्तत्वं का च सेति न निर्णीयते यत एता यावद्विंशता एव दृश्यन्ते सर्वा अपि जाज्ञायते तेन विंशतिरपि प्रक्षेपकेणैव कृत्वा प्राक्षेपि । सुदृढं चेदं येन प्रान्ते पुस्तकादर्शेषु दरिदृश्यते द्वादशोत्तरमार्याशतत्रयमित्युल्लेख ।

शविशेषो देहः, अपरः कुब्जहुंडसन्निवेशादिः। विज्ञानं विशिष्टो बोधो जीवादिपदार्थविषयः, अपरः प्रकृष्टाज्ञानपरिगतः
किञ्चिद्ज्ञः। दीर्घेणायुषा यथाकालविभागवर्तिना युक्तः, अपरस्तु गर्भकौमारयौवनावस्थादिषु अनियतायुः। बलं
शारीरादि तेन संपन्नो वीर्यवान्, अपरो दुर्बलः स्वशरीरकमपि कथंचिद्धारयति। भोगवाननेकेष्टशब्दादिसंपदुपभोगस-
मर्थः, अपरो भोगरहितः सतोऽपि च भोगानसमर्थो भोक्तुं। हिरण्यसुवर्णधनधान्यादिविभूत्या युक्तः एकः, अपरो
दारिद्र्याभिभूतो जरदन्तीखंडनिवसनः। एषां देशादीनां समृद्धिपर्यन्तानां वैषम्यं विषमतां विलोक्य कर्मोदयजनितां।
कथं केन प्रकारेण। विदुषां बुद्धिमतां नारकादिभवसंसारे रतिः प्रीतिर्भवति। कर्मोदयनिमित्तं शुभाशुभलक्षणं देशादि
विज्ञायोद्वेगः संसारात् कार्यः। तस्माद्धर्मानुष्ठानादर एव श्रेयानिति ॥ १०२ ॥

तथापरं वैराग्यनिमित्तमादर्शयन्नाह—

**अपरिगणितगुणदोषः स्वपरोभयबाधको भवति यस्मात्। पञ्चेन्द्रियबलविबलो रागद्वेषोदयनिबद्धः १०३**

टीका—गुणाश्च दोषाश्च गुणदोषाः। अपरिगणिता अनादृता गुणदोषाश्च येनासौ अपरिगणितगुणदोषः। प्रेक्षापूर्व-
कारी गुणान् दोषांश्च विचार्य गुणेषु प्रवर्तते दोषान् परिहरति। यश्चानालोचितगुणदोषः स खलु स्वपरोभयबाधको
भवति, स्वमात्मानं बाधतेऽपरं च बाधते। दोषप्रवृत्तावात्मानं बाधते, यथाऽयं प्रवृत्तस्तथाहमपि प्रवर्तयामीति परमपि

---

अव०—अनादृतगुणदोष एवंविधो जीवः पञ्चेन्द्रियाणां निजनिजविषयगाद्ध्र्ये तेन विह्वलो गतशुभपरिणामः रागद्वेषोदयनियंत्रितः॥१०३॥

बाधते । पञ्चेन्द्रियबलेन महताभिभूतत्वादुन्मार्गयायिनान्येन बलेन मार्गे प्रतिपादयितुमशक्यादिति विबलः विगतबलः ।
रागद्वेषोदयेन निबद्धो नियमितः रागद्वेषपरिणत इत्यर्थः ॥ १०३ ॥

यस्मादनालोचितगुणदोष एवंविधो भवति—

**तस्माद्रागद्वेषत्यागे पञ्चेन्द्रियप्रशमने च । शुभपरिणामावस्थितिहेतोर्यत्नेन घटितव्यम् ॥ १०४ ॥**

टीका—यस्मादेवं तस्माद्यथा रागद्वेषयोरात्यन्तिकत्यागो भवति तथानुष्ठेयं। पञ्चेन्द्रियबलं यथा प्रशाम्यति नोद्धृतशक्ति भवति तथा शुभपरिणामावस्थितिहेतोर्यत्नेन घटितव्यं । शुभ एव परिणामो यथा देशकुलविज्ञानादिरवाप्यते शुभपरिणामावस्थाने यो हेतुस्तस्य हेतोः प्रयत्नेनावाप्तिर्यथा स्यात् ॥ १०४ ॥

तथा चेष्टितव्यमित्याह—

**तत्कथमनिष्टविषयाभिकांक्षिणा भोगिना वियोगो वै । सुव्याकुलहृदयेनापि निश्चयेनागमः कार्यः ॥१०५॥**

टीका—तत्कथं चेष्टितव्यमित्याह—अनिष्टा विषया वक्ष्यमाणेन न्यायेन तानाकांक्षत्यभिलषति तेनानिष्टविषयाभिकांक्षिणा भोगिना भोगासक्तेन कथमात्यन्तिको वियोगः स्यादेभिः सहेति । वैशब्दः पादपूरणः । सुष्ठु व्याकुलहृदयेनापि

---

अव०—घटितव्यं चेष्टितव्यम् ॥ १०४ ॥ तत्कथं चेष्टितव्यमित्याह—अनिष्टविषयाभिकांक्षिणा भोगिना भोगासक्तेन सह वियोगो विषयाणां कथं स्यात् । वै इति प्रश्ने । आगमोऽभ्यसनीयः । अतिबाढं व्यग्रहृदयेनापि यथावद्विज्ञायैतानपायबहुलानागमोऽभ्यसनीयः॥१०५॥

वाढं व्यग्रहृदयेनापि सता । निश्चयेन यथावद्विज्ञायैतानिह परत्र चापायबहुलान् शब्दादिविषयान् । आगमः कार्यः ।
आगमो भगवदर्हत्सर्वज्ञप्रणीतोऽभ्यसितव्यः कार्यस्ततश्चैषामात्यन्तिकः स्वात्मनि प्रलयो भवत्यनेनाभ्युपायेनेति ॥ १०५॥

कथं पुनरिष्टा विषया इत्याह—

**आदावत्यभ्युदया मध्ये शृंगारहास्यदीप्तरसाः । निकषे विषया बीभत्सकरुणलज्जाभयप्रायाः ॥१०६॥**

टीका—आदौ प्रथमं कुतूहलादुत्सुकतया अत्यभ्युदयानुत्सवभूतान् मन्यते, उत्सव आगमिष्यतीति भवत्यानन्दश्चेतसि प्रथमं । मध्ये विषयप्राप्तौ सत्यां शृंगारवेषाभरणकुचकर्ममुखचुंबनकरनखक्षतप्रहारपरिहासप्रणयकोपादिमत्वाद्दीप्तरसाः । निकषे इति विशिष्टसंयोगोत्तरकालं विषयाः स्पर्शादयः प्रतिभान्ति बीभत्सा निर्वसनत्वात् प्रकटगुह्यवरांगविकृतिदर्शनात् । करुणास्तु बहुविलापविस्वरक्वणनश्रवणात् करुणाश्रयत्वादनुकंपापात्रत्वात् परिसमाप्तप्रयोजना ( नत्वा ) च्च त्वरिततरमादत्ते त्रपावती निवसनादि । बिभेति च गुरुजनादाशंकते मां मैवंविधां द्राक्षीत्कश्चिदिति । एवमेते विषया बीभत्सकरुणलज्जाभयायासबहुलाः पर्यन्ते । मध्येऽप्युदिततीव्रमोहवेदनाः । आरंभेऽतिकुतूहलौत्सुक्यभावः । न जातुचित्स्वास्थ्यमापादयन्तीति त्याज्याः ॥ १०६ ॥

ननु चोपभुज्यमानाः सुखलेशेनोपभोक्तारमनुगृह्णन्तो विषया इत्यधिकारे पठति—

**यद्यपि निषेव्यमाणा मनसः परितुष्टिकारका विषयाः । किंपाकफलादनवद्भवन्ति पश्चादतिदुरन्ताः॥१०७॥**

---

अव०—औत्सुक्यकारकाः प्रकटोल्बणस्नेहरागाः निकषे प्रान्ते बीभत्सादिभिर्बहुलाः ॥ १०६ ॥ दुःखान्ताः ॥ १०७ ॥

टीका—निषेव्यमाणा उपभुज्यमानाः क्षणमात्रं यद्यपि मनोहर्षं जनयंति तथापि पश्चाद्विपाककाले आपातरमणीया अपि सन्तः किंपाकफललक्षणोपमाः । किंपाकतरुफलानि हि रसनाग्रेणोल्लिह्यमानानि स्वादूनि सुरम्याणि च । परिणति-काले परासुतया योजयन्ति । अतो दुरन्ता दुःखान्ता इत्यर्थः ॥ १०७ ॥

तथापरं निदर्शयन्नाह—

**विपाककाले विनाशयति ॥ १०८ ॥**

**यद्वच्छाकाष्टादशमन्नं बहुभक्ष्यपेयवत् स्वादु । विषसंयुक्तं भुक्तं**

टीका—शाकं तीमनमष्टादशं यस्य तच्छाकाष्टादशमन्नं । बहुभक्ष्यं मोदकादि पेयं पानकविशेषः सीधुप्रसन्नादि वा तत्पेयं यत्रास्त्यन्ने तत्पेयवदन्नं । स्वादु मधुरादिसंयुक्तं । विषव्यतिमिश्रं भुक्तं । विपाककाले परिणतिसमये विनाश-यति ॥ १०८ ॥

**भवशतपरंपरास्वपि दुःखविपाकानुबन्धकराः॥१०९॥**

**तद्वदुपचारसंभृतरम्यकरागरससेविता विषयाः ।**

टीका—दार्ष्टान्तिकमर्थं दृष्टान्तेन समीकरोति तद्वदिति—उपचारश्चाटुकर्म विनयप्रतिपत्तिस्तेनोपचारेण संभृतं बहुकृतं । रम्यं रमणीयत्वमतिशयप्रीतिहेतुत्वं । रागः स्नेहविशेषः तस्य रसोऽतिशयः । उपचारसंभृतरम्यकरागरसेन

---

अव०—शाकोऽष्टादशो यत्र तीमनं मोदकाम्लकरसादि परिणतिसमये ॥ १०८ ॥ उपचारश्चाटुकर्मविनयप्रतिपत्तिः शयनादिः संभृतपिंडितरम्यकानि रतिकराणि अविच्छेदकारिणः ॥ १०९ ॥

सेविता उपभुक्ता विषयाः शब्दादयः । सकृन्मरणकारित्वात् विषान्नदृष्टान्तं दूरीकरोति पश्चार्धेन—भवशतानां परंपराः पद्धतयः सन्ततयः । सुदुःखेन विपाकेन अनुबन्धकरणशीला दुःखाविच्छेदकारिण इति ॥ १०९ ॥

**अपि पश्यतां समक्षं नियतमनियतं पदे पदे मरणम्।येषां विषयेषु रतिर्भवति न तान् मानुषान् गणयेत्११०**

टीका—पश्यतामपि समक्षं प्रत्यक्षेण प्रमाणेन । मरणं नियतकालमनियतकालं च । देवनारकाणां नियतमेव । अनियतकालं मनुष्यतिरश्चां च । पदे पदे स्थाने स्थाने नारकादिजन्मनि । आर्यानार्यादिभेदे गोमहिष्यजाविकादिभेदे च । अथवा नियतमिति सर्वकालमेव अनित्यं मनुष्यतिरश्चामायुः । संप्रतितनानामेवमवगतानित्यतानामपि येषां विषयेषु रतिः सक्तिर्भवति । न तान्मानुषान् गणयेत् कुशलः । तिर्यञ्चएव हि ते, निर्बुद्धिकत्वादिति ॥ ११० ॥

**विषयपरिणामनियमो मनोऽनुकूलविषयेष्वनुप्रेक्ष्यः।द्विगुणोऽपि च नित्यमनुग्रहोऽनवद्यश्च संचिन्त्यः १११**

टीका—मनोऽनुकूला ये विषया इष्टाः शब्दादयस्तेषां विषयाणां परिणामोऽनुप्रेक्ष्यः चिन्तनीय आलोचनीयः । इष्टपरिणामाः सन्तोऽनिष्टपरिणामा भवन्ति, अनिष्टपरिणामाश्चाभीष्टपरिणामा भवन्ति । नावस्थितः कश्चित्परिणामोऽस्ति । एवं

---

अव०—देवनारकाणां नियतकालं, अनियतकालं मनुष्यतिरश्चाम् ॥ ११० ॥ इष्टपरिणामाः सन्तोऽनिष्टपरिणामाः, अनिष्टपरिणामाः सन्तोऽभीष्टपरिणामाः । आलोचनीयः सर्वक्षेत्रावस्थाभावित्वात् । एवं चानवस्थितपरिणामविषयविरतौ अनुग्रहो गुणयोगतः, उपलक्षणत्वाद्बहुगुणः, चित्तप्रसन्नता ॥ १११ ॥

चानवस्थितपरिणामविषयविरतौ सत्यामनुग्रहो द्विगुणोऽनवद्यश्च संचिन्त्यः । अनुग्रहो गुणयोगः स च द्विगुणः बहुगुण एव द्विगुण एवोक्तः । द्विशब्दस्योपलक्षणत्वात् । अनवद्यश्चासौ पापबन्धाभावादित्यनुप्रेक्ष्यः ॥ १११ ॥

**इति गुणदोषविपर्यासदर्शनाद्विषयमूर्छितो ह्यात्मा । भवपरिवर्तनभीरुभिराचारमवेक्ष्य परिरक्ष्यः ॥११२॥**

टीका—इति इत्थं गुणान् दोषरूपेण यः पश्यति दोषांश्च गुणरूपेण प्रेक्षते, विपर्यासदर्शनात् वैपरीत्यं बुध्यते । विषयेषु शब्दादिषु मूर्छितस्तन्मयतां गतो य आत्मा । भवः संसारस्तत्र परिवर्तनं नरकादिषु जन्ममरणप्रबन्धस्तस्माद्भिन्यद्भिराचारमवेक्ष्य प्रथमांगार्थमनुचिन्त्य । परिरक्ष्यः परिपालनीय इति ॥ ११२ ॥

स चाचारार्थः पञ्चप्रकार इति दर्शयति समासेन—

**सम्यक्त्वज्ञानचारित्रतपोवीर्यात्मको जिनैः प्रोक्तः । पञ्चविधोऽयं विधिवत् साध्वाचारः समनुगम्यः ॥११३॥**

टीका—तत्र तत्त्वार्थश्रद्धानलक्षणः सम्यक्त्वाचारस्तदुपगृहीतो मत्यादिज्ञानपञ्चकाचारः अष्टविधकर्मचयरिक्तीकरणाच्च चारित्राचारः । तपो द्वादशभेदमनशनादि तपआचारः । वीर्यमात्मशक्तिर्वीर्याचारः । एवमेव पञ्चप्रकाराचारः प्रथमांगार्थः तीर्थकृद्भिरर्थतोऽभिहितः । तच्छिष्यैश्च सूत्रीकृतः । विधिवत्समनुगम्यो विज्ञेयः । कः पुनर्विधिः सूत्रग्रहणविधिः तावदष्टमयोगादिरर्थग्रहणविधिरनुयोगप्रस्थापनादिः । साधूनामाचारः साध्वाचारः अहोरात्राभ्यन्तरेऽनुष्ठेयः क्रियाकलाप इति ॥११३॥

---

अव०—इत्थं गुणान् दोषरूपेण दोषांश्च गुणरूपेण यः पश्यति गुणदोषविपरीतोपलब्धिः प्रथमांगं विलोक्य परिरक्ष्यः ॥ ११२ ॥

विधिना विज्ञेयः ॥ ११३ ॥

विभक्तस्याप्याचारस्य पञ्चधा नवब्रह्मचर्यात्मकस्याध्ययनार्थाधिकारद्वारेण पुनर्लेशोद्देशतोऽर्थमाचष्टे समासेन—

**षड्जीवकाययतनालौकिकसन्तानगौरवत्यागः। शीतोष्णादिपरीषहविजयः सम्यक्त्वमविकंप्यम्॥११४॥**

टीका—शस्त्रपरिज्ञायां षड् जीवनिकायाः पृथिव्यप्तेजोवायुवनस्पतित्रसाख्याः । तत्रादौ जीवास्तित्वप्रतिपादनं सामान्येन, ततः पृथिव्यादिकायस्वरूपव्यावर्णनं । तद्वधात्संसारहेतुः कर्मबन्धः, तद्वधविरतिश्च मनोवाक्कायैः कृतकारितानुमतिपरिहारादिति षट्सु जीवनिकायेषु यतना प्रयत्नः तद्रक्षणे ज्ञानपूर्वको व्यापार इति । लोकविजये लौकिकसन्तानगौरवत्यागः । लौकिकसन्तानो मातृपित्रन्वयः । शेषाश्च स्वजनसंबन्धिनः पत्नीपुत्रादयस्तेषु गौरवमादरः स्नेहासक्तिस्तत्त्यागः । तथा क्रोधमानमायालोभकषायविजयो विधेयो बलवता क्षमादिना बलेन । शीतोष्णीयाध्ययने शीतोष्णादिपरिषहविजयः क्षुत्पिपासादिपरिषहाणां द्वाविंशतेर्विजयोऽभिभवः । तत्र स्त्रीसत्कारपरीषहौ यावतः शीतौ विंशतिरुष्णाः शेषाः । सम्यक्त्वाध्ययने शंकादिशल्यशुद्धं तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमविकंप्यं दृढं निश्चितं वर्ण्यते ॥ ११४ ॥

**संसाराडुद्वेगः क्षपणोपायश्च कर्मणां निपुणः । वैयावृत्त्योद्योगः तपोविधिर्योषितां त्यागः ॥ ११५ ॥**

---

अव०—शस्त्रपरिज्ञा नाम आद्यध्ययनार्थं संक्षेपेणाह—मातापित्रादिः गौरवाणां ऋद्ध्यादीनां षड्जीवकाययतना प्रथमेऽध्ययने गौरवः त्यागो द्वितीये द्वाविंशतिपरिषहविजयस्तृतीये दृढसम्यक्त्वं चतुर्थे ॥ ११४ ॥ संसारोद्वेगः पञ्चमे, कर्मनिर्जरोपायः षष्ठे, वैयावृत्त्योद्यमः सप्तमे, तपोविधिरष्टमे, योषितां त्यागः स्त्रीपरिहारो नवमे ॥ ११५ ॥

टीका—लोकसाराध्ययने "लोकसारः" इत्यन्वर्थं नाम आदिपदेनावंतिरिति । तत्र संसाराडुद्वेगः हिंसादिप्रवृत्तो न मुनिस्तद्विरतो मुनिरकिंचनः कामजोगेषूद्विग्नोऽनेकदोषदर्शनात् । धर्मज्ञानं संयमनिर्वाणाख्यं । लोकसारमवेक्ष्यमाणः ससहायोऽमार्गमेव परित्यज्य सारमासादयति लोकस्येति। धूताध्ययने स्वजनमित्रकलत्रपुत्रादिनिरपेक्षता, तद्विधूननं तत्परित्यागः । कर्मणां च ज्ञानावरणादीनां च धूननोपायः । श्रुतज्ञानानुसारि क्रियानुष्ठानं शरीरोपकरणत्यागश्चेति । महापरिज्ञायां मूलोत्तरगुणान् परिज्ञाय यथावदवेत्य मंत्रतंत्राकाशगतिलब्धिरनुपजीवनं । प्रत्याख्यानपरिज्ञायां च प्रत्याख्याय परिहर्तव्यानि व्यावृत्तेन सदा ज्ञानदर्शनचरणेषूद्युक्तेन जवितव्यमित्येतदाह—वैयावृत्त्योद्योगः । विमोक्षयतनाध्ययने श्रावकाणां देशविमोक्षः साधूनां सर्वविमोक्षः । क्षीणकर्मणां मुक्तानामात्मनोऽपि स्वजनितैरेव कर्मनिर्यद्यस्य सकलकर्मांशवियोगो मोक्षः सप्रपञ्चो जक्तप्रत्याख्यानेंगिनीपादपोपगमनमरणैः सह वर्ण्यते । तपोविधिः प्राधान्याद्गृहीतः । उपधानश्रुते जगवता श्रीवर्धमानस्वामिना स्वानुष्ठिततपोव्यावर्णनं योषित्त्यागो ब्रह्मचर्यादिलक्षणं कृतं । एवमाचारो नवाध्ययनात्मकोऽर्थतो विजक्तः ॥ ११५ ॥

संप्रत्याचारांगेष्वध्ययननवकाद्याकृष्टेषु विस्तररचितेष्वधिकारा वर्ण्यन्ते—

**विधिना जैक्ष्यग्रहणं स्त्रीपशुपंडकविवर्जिता शय्या । ईर्याजाषांबरजाजनैषणावग्रहाः शुद्धाः ॥ ११६ ॥**

---

अव०—अंबरं वस्त्रं, भाजनं पात्रकादि तयोरेषणा तथावग्रहा देवेन्द्रादेः एते कीदृशाः शुद्धाः शुद्धिमन्तः ॥ ११६ ॥

जितो भिक्षासमूहो ग्राह्यः । शय्या प्रतिश्रयः तत्र स्त्रीपशुपंडकविव-
टीका—पिण्डैषणाध्ययने उद्गमोत्पादनैषणादोषवर्जितो भिक्षासमूहो ग्राह्यः । शय्या प्रतिश्रयः तत्र स्त्रीपशुपंडकविव- ... भिक्षाचंक्रमणादिक्रियाप्रवृत्तः शनैः पुरस्तात्
र्जिते स्थाने स्थातव्यम् । मूलोत्तरगुणशुद्धा शय्या ग्राह्येति । ईर्याध्ययने भिक्षाचंक्रमणादिक्रियाप्रवृत्तः शनैः पुरस्तात्
युगमात्रनिरुद्धदृष्टिः स्थावराणि जंगमानि च सत्त्वानि परिरक्षन् व्रजतीति । भाषा जाताध्ययने वाक्यमात्मपराविरोध्या-
लोच्य वाच्यमिति । वस्त्रैषणाध्ययने मूलोत्तरगुणशुद्धं लक्षणयुक्तं वासः समादेयमल्पपरिकर्मादि । पात्रैषणायामपि चोद्गमा-
दिविशुद्धं पात्रग्रहणम् । अलाब्वादि यथोक्तमादेयम् । अवग्रहप्रतिमाध्ययने अवग्रहो देवेन्द्रराजगृहपतिशय्यातरसाध-
र्मिकाणां पञ्चधा । सर्वथा सर्वतः परिमितोऽवग्रहो याच्यः । यत्र भाजनक्षालनस्रवणपुरीषोत्सर्गस्वाध्यायस्थानयुक्तोऽव-
ग्रहो योग्य इति । प्रथमचूला सप्ताध्ययनपरिमाणेयम् ॥ ११६ ॥

संप्रति द्वितीयचूलासप्ताध्ययनानि सप्तकाभिधानानि, तत्राधिकाराः—

**स्थाननिषद्याव्युत्सर्गशब्दरूपक्रियाः परान्योन्याः । पञ्चमहाव्रतदार्ढ्यं विमुक्तता सर्वसंगेभ्यः ॥ ११७ ॥**

टीका—प्रथमाध्ययने स्थानं कायोत्सर्गाख्यं वर्ण्यते । द्वितीयाध्ययने निषद्यास्थानं निविशनाख्यमाख्यायते । तृतीया-
ध्ययने उच्चारप्रस्रवणत्यागयोग्यप्रदेशप्ररूपणं व्युत्सर्गस्थानमुक्तम् । चतुर्थाध्ययने शब्दाकारपरिणतद्रव्यग्रहणे सति
रागद्वेषत्यागः । पञ्चमाध्ययने नानाविधरूपदर्शनेन रागद्वेषपरित्यागः कार्यः । सर्वत्र क्रियाशब्देनाभिसंबन्धः । स्थान-

---

अव०—स्थानं कायोत्सर्गरूपं, निषद्या स्वाध्यायभूमिः, त्यागः शब्दरूपयोररागः क्रियाशब्दः सर्वत्र परक्रियानिषेधः, प्रयत्नतस्तपस्वतो निःप्रतिकर्मणः परो यदुपकरोति संस्करोति तदयुक्तं, अन्योऽन्यक्रिया सापि निष्प्रतिकर्मवपुषो न युज्यते ॥ ११७ ॥

क्रिया निषद्याक्रियेत्यादि । षष्ठे परक्रियानिषेधः प्रयत्नवतस्तपसि प्रवृत्तस्य निःप्रतिकर्मशरीरस्य परो यदुपकरोति संस्क-
रोति तदयुक्तम् । सप्तमाध्ययनेऽन्योऽन्यक्रिया परस्परक्रिया सापि निःप्रतिकर्मवपुषो न युज्यत इति । तृतीयचूला
भावना तत्राप्रशस्तभावनां विहाय प्रशस्तभावना दर्शनज्ञानचरणतपोवैराग्यादिका भाव्याः । एकैकमहाव्रतभावनाश्च पञ्च
पञ्च । पञ्चमहाव्रतदार्ढ्यमिति । विमुक्तता सर्वसंगेभ्य इति चतुर्थचूलिकायां विमुक्ताध्ययने कर्मणो विमुक्तिरशेषतो देशतो
वापि चिन्त्यते । यावन्तः केचित्संगास्तेभ्योविमुक्तिरिति । निशीथाध्ययनं पञ्चमी चूला चतसृषु चूलासु योऽतिचारस्त-
द्विशुद्ध्यर्थं प्रायश्चित्तदानं तत्रेति ॥ ११७ ॥

**साध्वाचारः खल्वयमष्टादशपदसहस्रपरिपठितः । सम्यगनुपाल्यमानो रागादीन्मूलतो हन्ति ॥११८॥**

टीका–एवमेषां साधूनां समाचारः । खलुशब्दोऽवधारणे । नवब्रह्मचर्यात्मकः सुप्तिङन्तपदगणनयाऽष्टादशपदसहस्रा-
त्मकः परिपठितः ( अत्र चार्थोपलब्धिस्तत्पदमिति ) सम्यग्यथोक्तेन विधिना ग्रहणधारणानुष्ठानव्याख्याभिरनुपाल्यमा-
नोऽभ्यस्यमानो रागद्वेषमोहान् समूलकाषं कषतीति । अयं चापरो गुणः प्राप्यते ॥ ११८ ॥

**आचाराध्ययनोक्तार्थभावनाचरणगुप्तहृदयस्य । न तदस्ति कालविवरं यत्र क्वचनाभिभवनं स्यात् ॥११९॥**

---

अव०–साध्वाचारः पूर्वोक्ताध्ययनकथितस्वरूपः खलु निश्चयेन अयं प्रत्यक्षः ॥ ११८ ॥ भावना वासनाभ्यासः षड्जीवनिकाययत-
नादिका तदाचरणेन च गुप्तहृदयस्य च मूलोत्तरगुणैर्गुप्तमनस्कतदनुष्ठानव्यग्रस्य । किं भवतीत्याह—न तदस्ति कालविवरं यत्र कालच्छिद्रे-
ऽभिभूयते प्रमादकषायविकथादिभिः ॥ ११९ ॥

टीका–आचाराध्ययनमाचारागमस्तत्रोक्तो योऽर्थस्तत्र भावना वासनाभ्यासः षड्जीवनिकाययतनादिका तदाचरणेन च गुप्तहृदयस्य च मूलोत्तरगुणैर्गुप्तमनस्कतदनुष्ठानव्यग्रस्य । किं भवतीत्याह–न तदस्ति कालविवरं कालछिद्रं यत्र छिद्रेऽभिभूयते कषायप्रमादविकथादिभिरनाचारिभिरिति ॥ ११९ ॥

तथा चार्थव्यग्रस्य न कदाचिद्दिमतिर्मुक्तिपरिपन्थिनी साधोर्भवतीत्याह–

**पैशाचिकमाख्यानं श्रुत्वा गोपायनं च कुलवध्वाः । संयमयोगैरात्मा निरन्तरं व्यापृतः कार्यः ॥ १२० ॥**

टीका–केनचिद्वणिजा मंत्रबलेन पिशाचको वशीकृतः । पिशाचकेनोक्तं ममाज्ञादानमनवरतं कार्यं । यदैवादेशं न लभे तदैवाहं भवन्तं विनाशयामीति । प्रतिपन्नं च वणिजा । आज्ञा च दत्ता गृहकरणधनधान्यानयनकनकरजतादिविभूतिरिष्टा यथेष्टं वणिजः संपादिता पिशाचेन । पुनश्चाज्ञा मार्गिता । वणिजाऽभिहितं दीर्घतमं वंशमानीय गृहांगणे निखायारोहणमवरोहणं च कुर्वीथास्तावद्यावदन्यस्याज्ञादानस्यावकाशो भवतीति । न चास्ति छिद्रं किंचिद्वणिजो यत्राभिभवः स्यादिति । साधोरप्यहोरात्राभ्यन्तरानुष्ठेयासु क्रियासु वर्तमानस्य नास्ति छिद्रं विश्रोतसागमनमिति । अपरा कुलवधू रूपलावण्यवती केनचिद्विटेन दृष्टा, प्रार्थिता परिभोगं, प्रतिपन्नं च तया । श्वश्र्वा च विज्ञाय तदभिप्रायं सर्वत्र गृहव्यापारे नियुक्ता । प्रातरेव गृहप्रमार्जनगोमुखकरणभांडप्रक्षालनाधिश्रयणरन्धनपरिवेषणभाजनमार्जनोपलेपनखंडनलंटनपादप्रक्षालनाभ्यंगनानेककार्यव्यग्रा कृच्छ्रेण निद्रामासादयति । तस्याः सुदूरादेव विटप्रार्थनकथा व्यपेता । एवं साधोरप्याचार-

व्यग्रस्य विसरत्येवान्या विषयादिकश्चेति । अतः संयमयोगैरात्मा व्यापृतः कार्यः । संयमः सप्तदशभेदस्तद्विषया योगा
व्यापारास्तैरात्मा व्यापृतो व्यग्रः कार्य इति ॥ १२० ॥

इत्थं विहितक्रियानुष्ठानव्यग्र ऐहिकेषु भोगकारणेषु भावयेदनित्यतामित्याह—

**क्षणविपरिणामधर्मा मर्त्यानामृद्धिसमुदयाः सर्वे। सर्वे च शोककजनकाः संयोगा विप्रयोगान्ताः ॥१२१॥**

टीका—क्षणेन विपरिणामधर्माः । विशब्दः कुत्सायाम् । कुत्सितः परिणामधर्मः । स्वतः प्रीतिकारिणः सन्तोऽप्रीतिका-
रिणः परिणतिविशेषाज्जायन्ते । स्वल्पेनैव कालेनान्यस्वभावा भवन्ति । मरणधर्माणो मर्त्यास्तेषां ऋद्धिसमुदया धनधान्य-
हिरण्यसुवर्णादयः सर्वे दक्षिणोत्तरमथुराद्वयनिवासिवणिग्द्वयविभूतिसमुदयवत् । दक्षिणोत्तरमथुराख्यानकं । अन्यथात्वं
च प्रतिपन्नाः शोकहेतवो नियमेन स्युः । संयोगाः पुत्रपत्नीप्रभृतयो विप्रयोगान्ता एव भवन्ति । न खलु कश्चित् संयो-
गोऽस्त्यात्यन्तिक इति भावयतोऽभिलाषस्तेषु न भवतीति ॥ १२१ ॥

---

अव०—स्वल्पकालेनैव विपरिणामधर्माः कुत्सितपरिणामधर्मा अन्यथाभवनस्वभावाः, मर्त्या मरणधर्मिणो मनुष्यास्तेषां ऋद्धिसमु-
दया धनधान्यहिरण्यस्वर्णादिविभूतिसमूहा अनित्याः संयोगाः पुत्रपत्नीप्रभृतिसंबन्धाः विप्रयोगावसानाः शोकोत्पादका भवन्ति, ततो न
किंचिद्विषयाभिलाषेण ॥ १२१ ॥

तस्मान्न किंचिद्विषयसुखाभिलाषेणेति दर्शयन्नाह—

**भोगसुखैः किमनित्यैर्भयबहुलैः कांक्षितैः परायत्तैः। नित्यमभयमात्मस्थं प्रशमसुखं तत्र यतितव्यम् १२२**

टीका—भुज्यन्त इति भोगाः शब्दादयस्तज्जनितानि सुखानि भोगसुखानि। तानि चोक्तेन न्यायेनानित्यानि। किमिति क्षेपे। न किंचिदेभिरित्यभिप्रायः। भावयन् चौरदायादाग्निभूपतिभ्यो नित्यमेवाशंकते। भोगसुखकारणेषु वृद्धिसमुदयेषु भयबहुलेषु प्रभूतेषु भयेषु। कांक्षितैरित्यभिलषितैः। परायत्तैरिति शब्दादिविषयायत्तैर्मनोहारिषु शब्दादिषु सत्सु सुखमुपजायते भोगवतामिति। तस्मात्तेष्वभिलाषमपहाय। नित्यमात्यन्तिकम्। अभयमविद्यमानभीतिकम्। आत्मायत्तं न परायत्तम् प्रशमसुखं मध्यस्थस्यारक्तद्विष्टस्योपशान्तकषायस्य यत्तदेवंविधं, तत्रैव प्रयत्नः कार्य इति॥ १२२॥

तच्च सुलभमेवेति दर्शयति—

**यावत्स्वविषयलिप्सोरक्षसमूहस्य चेष्यते तुष्टौ। तावत्तस्यैव जये वरतरमशठं कृतो यत्नः॥ १२३॥**

---

अव०—भोगजनितसुखैः क्षणविनश्वरैः प्रभूतभीतिभृतैः कांक्षितैरभिलषितैः शब्दादिविषयाधीनैः किं? न किंचित्प्रयोजनमेभिः तस्मात्तेष्वभिलाषमपहाय नित्यमात्यन्तिकं, अभयमविद्यमानभीतिकं, आत्मस्थं स्वायत्तं प्रशमसुखं मध्यस्थस्यारक्तद्विष्टस्योपशान्तकषायस्य यच्छर्म तदेवंविधं तत्रोद्यतो भव॥ १२२॥ इन्द्रियग्रामस्य शब्दादिविषयस्य लब्धुमिच्छतः प्रिये कर्तव्ये यावत्प्रयासः क्रियते तावत्तस्यैवाक्षसमूहस्य निग्रहे वरतरं बहुगुणं ऋजुचित्तेन उद्यमः कृतः॥ १२३॥

टीका—अक्षसमूहस्येन्द्रियग्रामस्य । स्वविषयलिप्सोः शब्दादिविषयाभिलाषिणः शब्दादीन् स्वविषयान् लब्धुमिच्छतः । तुष्टौ प्रिये कर्तव्ये । यावत् चेष्ट्यते प्रयासः क्रियते तावत्तस्यैव जयेऽक्षसमूहस्याभिभवे निग्रहे नियमने । वरतरं शोभनतरं बहुगुणम् । अशठं मायारहितमृजुना चित्तेन । यत्नः कृतः । वरतरमशठमिति क्रियाविशेषणम् । यत्र तत्क्रियते तद्वरतरमशठं चेति । इतश्च प्रशमसुखं सुलभम् ॥ १२३ ॥

**यत्सर्वविषयकांक्षोद्भवं सुखं प्राप्यते सरागेण । तदनन्तकोटिगुणितं मुधैव लभते विगतरागः ॥१२४॥**

टीका—यत्सुखं सकलविषयसामग्र्यामाकांक्षितायामवाप्तायामुद्भूतमुपजातं । सरागेण रागवता । भूयसायासेन प्राप्यते । तदेव सुखमनन्ताभिः कोटीभिर्गुणितमभ्यस्तम् । मुधैव विना मूल्येन विना वायासेन । विगतरागः प्रशममुखमवाप्नोतीति ॥

**इष्टवियोगाप्रियसंप्रयोगकांक्षासमुद्भवं दुःखम् । प्राप्नोति यत्सरागो न संस्पृशति तद्विगतरागः ॥१२५॥**

टीका—इष्टस्य शब्दादेः पुत्रादेर्वा हिरण्यसुवर्णादेर्वा वियोगे । अनिष्टस्य चाप्रियस्य वा संयोगे । इष्टे तावदविप्रयोगाकांक्षा । अनिष्टे च विप्रयोगाकांक्षा । तस्याः कांक्षायाः समुद्भूतमुत्पन्नं यद्दुःखं । सरागो विषयसुखाभिलाषी । यत्प्राप्नोति । तद्दुःखं विगतरागो न संस्पृशति नासादयति । विगतरागेण मध्यस्थेन तन्न प्राप्यत इत्यर्थः ॥ १२५ ॥

---

अव०—सरागेण मोहयुक्तेन विषयाभिलाषतः प्राप्यं सुखं तस्मादनन्तकोटिगुणितं मूल्यं विनाऽनायासेन वीतरागः प्रशमसुखमाप्नोति ॥ १२४ ॥ इष्टस्या(ष्टा)वियोगकांक्षानिष्टविप्रयोगकांक्षोत्पन्नं दुःखं सरागः प्राप्नोति, न वीतरागः ॥ १२५ ॥

**प्रशमितवेदकषायस्य हास्यरत्यरतिशोकनिभृतस्य। भयकुत्सानिरभिभवस्य यत्सुखं तत्कुतोऽन्येषाम्॥१२६॥**

टीका—प्रशमिताः प्रशमं नीता वेदकषाया येन। वेदाः स्त्रीपुंनपुंसकाख्याः। कषायाः क्रोधादयः। वेदोदयात्पुनर्नाभिलषति स्त्रियं, स्त्री न पुमांसं, तदुभयं नपुंसकः, तदुभयाभ्यामप्राप्तौ दुःखं। प्रशमितवेदस्य तन्न भवति। क्रोधाद्यभ्यादीपितोऽपि दुःखभागेव जायते। शमितकषायस्य तु तदभावः। हास्यं हर्षाद्भवति। रतिः प्रीतिर्विषयेषु सक्तिः। अरतिरुद्वेगः। शोको मानसं दुःखं इष्टवियोगादौ। एतेषु हास्यादिषु मोहभेदेषु। निभृतः स्वस्थः। सत्यपि हास्यकारणे नास्ति हास्यं, न रतिः, नारतिः। सत्स्वपि तत्कारणेषु अनित्यताभावना, ततश्च शोकोऽपि नास्त्येव। भयमिहलोकादानादि सप्तविधम्। कुत्सा जुगुप्सा निन्दा। साप्यनित्यभावनात एव निर्जिता। भयमपि सावष्टंभादेव भवकारणापगमाद्वा विजयते। एवं भयकुत्साभ्यामुद्भूतस्य निरभिभवस्य। यत्सुखं प्रशान्तचेतसः। तत्कुतोऽन्येषां रागिणामिति॥ १२६॥

पुनः प्रशमसुखस्यैवोत्कर्षं विषयसुखाभिदर्शयन्नाह—

**सम्यग्दृष्टिर्ज्ञानी ध्यानतपोबलयुतोऽप्यनुपशान्तः। तं लभते न गुणं यं प्रशमगुणमुपाश्रितो लभते॥१२७॥**

टीका—शंकादिदोषरहितः सम्यग्दर्शनसंपन्नः। यथासंभवं च मत्यादिज्ञानेन युक्तः। शुभध्यानबलेन च युक्तोऽपि केन-

---

अव०—एतेषु हास्यादिभेदेषु निभृतः स्वस्थस्तस्य यत्सुखं, तद्रागिणां कुतः॥ १२६॥ एवंगुणयुक्तोऽपि येनालमनुपशान्तोऽशमितविषयकषायः तं गुणं निरुत्सुकत्वं स्वभावत्युपचयरूपं नाप्नोति॥ १२७॥ १ ना पुरुषः

लमनुपशान्तः । अशमितवेदकषायोऽनुपशान्तः । तं गुणं न लभते न चाप्नोति । प्रशमगुणमुपाश्रितो यं गुणं लभते ज्ञान
चारित्रोपचयलक्षणं निरुत्सुकत्वगुणं च। न त्वनुपशान्तः तं गुणमवाप्नोतीति। तस्मात्प्रशमसुखायैव यतितव्यमिति ॥१२७॥

भूयोऽपि प्रशमसुखोत्कर्षख्यापनायाह–

**नैवास्ति राजराजस्य तत्सुखं नैव देवराजस्य । यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥ १२८ ॥**

टीका–राजराजश्चक्रवर्ती वासुदेवादिर्वा । पूर्वः सकलभरतक्षेत्राधिपतिः । उत्तरोऽर्धभरताधिपतिः । मनुष्यभवजन्मसुखस्य प्रकर्षवर्तिनावेतौ । वासुदेवचक्रवर्तिनोरपि नास्ति तादृशं सुखं, यादृशं प्रशमस्थितस्येति । तद्धि चक्रवर्त्यादिसुखं शब्दादिसम्मूर्च्छजनितं तस्य चानित्यत्वं प्राक् प्रतिपादितं । न चैकान्तेन सुखहेतुत्वं शब्दादीनां, विपरिणतिधर्मत्वात् । देवेन्द्रस्य सुखं प्रकृष्टं स्यादिति, तदपि चोपरितनेन्द्रसुखप्रकर्षदर्शनात्तदाकांक्षिणः च्युतिचिन्तनाच्च दुःखव्यतिकीर्णमेव । अथवा देवराजः सर्वदेवोत्तमत्वादनुत्तरविमानवासी । तस्यापि यत् सुखं तदपि स्थितिक्षयं मनुष्ययोषिदुदरगर्तनिमज्जनं च दुःखमनुचिन्तयतस्तस्यापि न तादृक् सुखमस्ति दुःखलेशकलंकितम् । यदिहैव सुखं साधोर्मनुष्यजन्मनि प्रशमस्थितस्य विनिवृत्तसकलाकांक्षस्यात्महितगवेषिणो विशिष्टज्ञानसमन्वितस्य लोकव्यापाररहितस्य । लोकव्यापारः कृष्यादिप्रवृत्तिः कामभोगसाधनोपादित्सा । एवंविधेन व्यापारेण रहितस्य । प्रशमसुख एव व्यवस्थापितचेतोवृत्तेर्यत्सुखं न तद्राजराजे न देवराजे इति ॥ १२८ ॥

---

अव०–चक्रवर्तिवासुदेवादिस्तस्य महेन्द्रस्य च तादृशं सुखं नास्ति यादृशं प्रशमस्थितस्य ॥ १२८ ॥

प्रशमसुखमेव पुनः स्पष्टयति—

**संत्यज्य लोकचिन्तामात्मपरिज्ञानचिन्तनेऽभिरतः ।**
**जितरोषलोभमदनः सुखमास्ते निर्ज्वरः साधुः ॥ १२७ ॥**

टीका—लोकः स्वजनः परजनश्च तद्विषया या चिन्ता दारिद्र्यदौर्भाग्यादिलक्षणा । अकृतपुण्यानां च परलोके दुर्गतिप्राप्तिलक्षणा तां । परित्यज्य विहाय । आत्मनः परिज्ञानमनादौ संसारेऽयमात्मा शारीराणि मानसानि च दुःखान्यनुभवन्नतृप्तः कामभोगसुखेषु कथमपि मनुष्यजन्मासादितवान् बोधिं च । तदधुना यथा संसारे बहुदुःखसंकटे न भ्रमति, तथा प्रयत्नः कार्यो मयेति आत्मपरिज्ञानचिन्तन एवाभिरतः परकार्यविमुखः । जिताः परिभूता रोषलोभमदनादयो येन । रोषग्रहणाद्द्वेषः । लोभग्रहणाद्रागः । मदनग्रहणात्पुरुषवेदादिः । एतज्जयाच्च सुखमास्ते स्वस्थस्तिष्ठत्युपद्रवरहितः । ज्वरो रोगविशेषस्तेन ग्रस्तः परितापशिशिरलक्षणेन रतिमविन्दन् दुःखमास्ते । स एवंविधो निर्गतोऽपेतो ज्वरो यस्मात्स निर्ज्वरः । ज्वर इव ज्वरः रोषलोभमदनाख्यः । मोक्षसाधनाभ्युद्यतः साधुरिति ॥ १२७ ॥

---

अव०—स्वजनपरजनविषयां चिन्तां दारिद्र्यधनाढ्यदौर्भाग्यसौभाग्यादिरूपां विहाय । आत्मपरिज्ञानमनादौ संसारे परिभ्रमन्नयमात्मा सुखदुःखान्यनुभवन्नपि न तृप्तः, सोऽधुना कथमेभिस्तृप्तो भवेत्तदधुना यथा संसारे बहुसंकटेऽयं न भ्रमति तथा प्रयत्नो मया कार्य इत्यात्मज्ञानचिन्तन एवाभिरतः परकार्यविमुखो जितमदनादिसर्वदोषः सुखमास्ते स्वस्थ उपद्रवरहितस्तिष्ठति । निर्जरः निर्गताऽपेता जरा हानिः सा च प्रस्तावात्प्रशमामृतस्य यस्यासौ निर्जरः ॥ १२९ ॥ १ निर्जर इति वा

सन्त्यज्य लोकचिन्तामित्युक्तं तत्कथं परित्यक्तलोकचिन्तस्य भरणपोषणादिवृत्तिरात्मनः स्यादित्याह—

**या चेह लोकवार्ता शरीरवार्ता तपस्विनां या च। सद्धर्मचरणवार्तानिमित्तकं तद्द्वयमपीष्टम् ॥१३०॥**

टीका—वर्तनं वृत्तिः भरणपोषणादिका वृत्तिरेवंविधा एवंप्रकारा यस्यां विद्यते सा वार्ता कृषिपाशुपाल्यवाणिज्यादि लोकस्य वार्ता। तस्यां चिन्तनमेतावदेव लोकवार्तायामुचिते भिक्षाकाले स्वार्थमेवोपसाधितेऽशनादिषु हिण्डमानोऽकृताकारितानुमतमशनादि यल्लभ्यते लोकवार्ता। यतस्तच्छरीरवार्तायाः कारणं भवति साधूनां शरीरवृत्तेः शरीरस्थितेर्निमित्तं भवति तपस्विनां। तत्र येयं लोकवार्ता या च तपस्विनां शरीरसाधारणवार्ता, एतद्वार्ताद्वयमपि सद्धर्मचरणवार्तानिमित्तकमिष्टम्। सद्धर्मो दशलक्षणकः क्षमादिः। चरणं मूलोत्तरगुणकलापः। सद्धर्मचरणवृत्तिः। सद्धर्मचरणवार्ता। सद्धर्मचरणवृत्तेरनन्तरं कारणं शरीरसंधारणम्। शरीरसंधारणवृत्तेश्च लोकवार्ता कारणम्। पारंपर्येण सद्धर्मचरणवार्तायाः लोकवार्ता कारणमिति ॥ १३० ॥

अपि च लोकवार्तान्वेषणे प्रयोजनमिदमपरम्—

**लोकः खल्वाधारः सर्वेषां ब्रह्मचारिणां यस्मात्। तस्माल्लोकविरुद्धं धर्मविरुद्धं च संत्याज्यम् ॥१३१॥**

---

अव०—कृषिवाणिज्यादिचिन्तनं लोकवार्ता धर्मनिर्वाहपृच्छा शरीरनिर्वाहचिन्तनं शोभनक्षान्त्यादिसद्धर्मचरणवार्तार्थः एतद्द्वयमभीष्टं लोकवार्तातच्छरीरवार्तायाः कारणम् ॥ १३० ॥ आधार आश्रयो वर्तत इति शेषः धर्मचारिणां संयमिनां लोके जातमृतसूतकनिराकृतगृहगमनादि मधुमांसादि च धर्मविरुद्धम् ॥ १३१ ॥

टीका–लोको जनपदः । खलुशब्दोऽवधारणे । लोक एवाधारः । सर्वेषां ब्रह्मचारिणां यस्मात् । ब्रह्म संयमः सप्तदशभेदः । तद्योगात् संयमिनः । तेषां सर्वेषामिति गच्छवासिनां गच्छनिर्गतानां च । तस्माल्लोके यद्विरुद्धं जातमृतकसूतकसमूहनिराकृतादिगृहेषु भिक्षादिग्रहणमभोज्येषु च परिहार्यम् । तथा चान्यैरप्युक्तम्–" जे जहिं दुगुंछिदा खलु पवावणवसहिभत्तपाणेसु । जिणवयणे पडिकुट्ठा वज्जेज्ज तहा पयत्तेण ॥ १ ॥ " यच्च लोकैकदेशे विरुद्धं मद्यमांसलशुनबीजानन्तकायादि धर्मसाधनविरुद्धमनेकं तदपि परिहार्यमिति ॥ १३१ ॥

इतश्च लोकवार्तान्वेषणं श्रेयोहेतुरिति दर्शयति–

**देहो नासाधको लोकाधीनानि साधनान्यस्य । सद्धर्मानुपरोधात्तस्माल्लोकोऽभिगमनीयः ॥ १३२ ॥**

टीका–शरीरमाद्यं खलु धर्मसाधनं । तस्य च देहस्याहारोपधिशय्या साधनं । साधनरहितस्य देहस्यासंभव एव । तानि चास्य साधनानि लोकाधीनानि लोकायत्तानि भवन्ति । अतः किं सद्धर्मानुपरोधात् । सद्धर्मस्य क्षमादेरविरोधात् । लोकोऽभिगमनीयः लोकवार्तान्वेषणमेवमर्थं करणीयमिति ॥ १३२ ॥

पर एवोपदेष्टा भवति दोषगुणयोरित्याह–

**दोषेणानुपकारी भवति परो येन येन विद्वेष्टि । स्वयमपि तद्दोषपदं सदा प्रयत्नेन परिहार्यम् ॥१३३॥**

---

अव०–देहः शरीरं नैव अन्नपानवसनादिभिर्विना यापयितुं शक्यः तान्यन्नपानवसनादिसाधनानि लोकवशानि सद्धर्मस्य क्षमादेरविरोधाद्धर्मविरुद्धत्यागेनानुवर्तनीयः ॥ १३२ ॥ दोषेणानुपकारी भवति प्रत्युतापकारेण प्रवर्तते परो लोकः कुध्यति आत्मना ॥ १३३ ॥

टीका—येन येनाभ्यस्यमानेन कर्मणा परो लोको विद्वेष्टि क्रुध्यति । भवति चानुपकारी । प्रत्युतापकारे वर्तते । स्वयमप्यात्मनापि तद्दोषपदं परिहार्यमप्रमत्तेन सता अन्यः कुर्वन् परस्य दृष्टः किंचिदप्रियकारणं, तदपेक्ष्य स्वयमपि तद्दोषस्थानं परिहार्यं अनेनास्याप्रियं भवतीति सकलप्रमादरहितेन परित्यजनीयमिति ॥ १३३ ॥

यथैतत्परिहरणीयं तथैतदपीत्याह—

**पिंडैषणानिरुक्तः कल्पाकल्पश्च यो विधिः सूत्रे । ग्रहणोपभोगनियतस्य तेन नैवामयभयं स्यात् ॥१३४॥**

टीका—पिंडैषणाध्ययने निरुक्तो निश्चयेनाभिहितः । उद्गमोत्पादनैषणादोषरहितो यो विधिः । कल्पनीयाकल्पनीयो ग्राह्यत्याज्यलक्षणः । सूत्रे पारमार्षे आगमे । ग्रहणे नियमः परिमितो ग्राह्यः । यथोज्झनीयदोषो न भवति । उपभोगे च नियतः द्वात्रिंशतः कवलानां न्यूनानामेवाभ्यवहारः कार्यः । तथाप्यार्षेऽप्युक्तम्—"अद्धमसणस्स सवंजणस्स कुज्जा दवस्स दो भाए । वायपवियारणट्ठा छब्भागं ऊणयं कुज्जा ॥ १ ॥" इत्थं च ग्रहणोपभोगनियतस्य कल्पनीयस्य तेन विधिना अभ्यवह्रियमाणस्य । न जातुचिदामयभयमजीर्णजनितव्याधिभयं भवेत् । एवं च मान्द्यादिदोषाधिकरणपरिहारः । धर्म्यासु च क्रियासु प्रवृत्तेरपरिहाणिः । तस्मादकल्प्यपरिहारेणापरिमितानियतभोगत्यागेन च भुंजानस्य न किंचिद्दुष्यतीति ॥१३४॥

---

अव०—पिंडैषणाध्ययनभणितो निश्चयेन कल्प्यो ग्राह्योऽकल्प्यः परिहार्यः आगमे आदानासेवनयोर्नियतवृत्तेः तेन विधिगृहीताहारेण ॥ १३४ ॥

एतदेव स्पष्टयन्नाह—

**व्रणलेपाक्षोपांगवदसंगयोगभरमात्रयात्रार्थम् । पन्नग इवाभ्यवहरेदाहारं पुत्रपलवच्च ॥ १३५ ॥**

टीका—व्रणलेपवत् अक्षोपांगवच्चेति दृष्टान्तद्वयं । व्रणलेपस्तावानेव देयो यावता पूयादिनिर्हरणसंरोहणे भवतः । अतोऽतिमात्रयाऽकिंचित्करमेव लेपदानं । अक्षस्योपांगोऽभ्यंजनं तच्च नवनीतं तावन्मात्रमेव दीयते यावता शकटं भारमुद्वहत्यनायासेन । न चास्तीति कृत्वा प्रकामं नवनीतादेरभ्यञ्जनस्य दानं निष्फलत्वात् । एवं साधुनापि क्षुद्व्रणसंरोहणायाहारलेपप्रदानमसंगयोगभरमात्रयात्रार्थं कार्यम् । संगः स्नेहः । योगा मनोवाक्कायाः । योगेषु शरीरादिषु लावण्यमृजाद्याशयपरिहारोऽसंगः । अतोऽसंगयोगः योगेष्वसंग इत्यर्थः । योगानां भरः क्रियानुष्ठानं यावता क्रियासमर्थं शरीरादि भवति तावन्मात्रमेवाभ्यवहरति, नातिरिक्तम् । यात्रा दशविधचक्रवालसामाचारी स्वाध्यायभिक्षाचंक्रमणादिका च यात्रा तदर्थं । यथाह—"तं पि ण रूवरसत्थं भुंजंताणं नचेव दप्पत्थं । धम्मधुरावहणत्थं अक्खोपंगो व जत्तत्थं ॥ १ ॥" भोजनैषणामधिकृत्याह—पन्नग इवाभ्यवहरेत् सर्पो हि भक्ष्यमशित्वा न चर्वणमाचरति ग्रसत एव गिलत्येव, तथा साधुरपि भुञ्जानो न चर्वणं करोति । तथा चार्षं सूत्रम्—"नो वामाउ हणुआउ दाहिणं हणुअं संकमणा, दाहिणाउ वामं"

---

अव०—व्रणे गंडे लेपः अक्षस्य धुरा सैवोपांगं अभ्यवहरेदित्यत्रापि योज्यं, असंगा मनोवाक्कायेष्वसंगाः साधवस्तेषां योग्यः क्रियानुष्ठानं तेषां भरः संघातः, स एव तन्मात्रं, तस्य यात्रा निर्वाहस्तदर्थं धर्मानुष्ठाननिर्वाहार्थमित्यर्थः । पन्नगो यथा चर्वणवर्जितमेव गिलति एवं साधुरपि निलातिपुत्रमारितधनश्रेष्ठिसुतामांसास्वादकपितृपुत्रादिवद्वा, यथा तैः शरीरस्य धारणार्थमेव तत्कृतं तथा साधुरपि ॥ १२५ ॥

इत्यादि । पुत्रपलं मांसं पुत्रमांसमित्यर्थः । पुत्रशब्दोऽपत्यवचनः । चिलातपुत्रव्यापादितदुहितृमांसास्वादनवदिति । अयमभिप्रायः पितुर्भ्रातुर्वा भक्षयतस्तन्मांसं न तत्रास्ति रसगार्ध्यं, शरीररक्षणार्थमेव केवलं ताभ्यामास्वादितं, न रसार्थं दर्पार्थं वा मांसोपयोगः कृतस्तथा साधुना रसेष्वगृद्धेन दर्पविवर्जितेन यथालब्धमेषणीयं भोक्तव्यमिति ॥ १३५ ॥

पुनरभ्यवहारमेव विशिनष्टि—

**गुणवदमूर्छितमनसा तद्विपरीतमपि चाप्रदुष्टेन । दारूपमधृतिर्भवति कल्प्यमास्वाद्यमास्वाद्यम्॥१३६॥**

टीका—गुणवदिष्ट रसगन्धम् । मूर्छितं प्रीतं रागयुतं च मनो यस्य स मूर्छितमनाः । न मूर्छितमना अमूर्छितमनाः । अमूर्छितमनसा भक्ष्यमास्वाद्यं भोज्यमिति । तद्विपरीतमित्यमनोज्ञमनिष्टरसगन्धम् । तदप्यप्रदुष्टेनेत्यर्थः । यात्रासाधनमात्रमालंबनीकृत्य यत्किंचिदेषणीयमरक्तद्विष्टेन चित्तेनाभ्यवहरेत् । दारूपमा धृतिर्यस्याविकारिणी । काष्ठं हि वास्यादिभिस्तक्ष्यमाणं न द्वेषं भजते, नापि चन्दनपुष्पादिभिः पूज्यमानं रागमुद्वहति । यथा तदचेतनं रागद्वेषरहितं, तद्वत् साधुरपि सत्यपि चेतनावत्त्वे इष्टानिष्टेऽन्नपानलाभे सति भोक्तव्यम् । अरक्तद्विष्टेन कल्पनीयमास्वाद्यं भक्षणीयम् । पुनरास्वाद्यमिति भोक्तव्यमित्यर्थः ॥ १३६ ॥

---

अव०—विशिष्टतरास्वादं अगृद्धचित्तेन साधुनेति प्रक्रमः तद्विपरीतमविद्यमानास्वादमपि द्वेषरहितेन वृको यथा सरसं विरसं वा न विलोकयति, तद्वत्साधुनापि दारूपमधृतिना दारुतुल्यसमाधिना आस्वाद्यं वस्तु स्वाद्यं क्रिया ॥ १३६ ॥

तच्च भोजनं कालाद्यपेक्षमभ्यवह्रियमाणं नाजीर्णादिदोषकारि भवतीति दर्शयति—

**कालं क्षेत्रं मात्रासात्म्यं द्रव्यगुरुलाघवं स्वबलम् । ज्ञात्वा योऽभ्यवहार्यं भुङ्क्ते किं भेषजैस्तस्य ॥१३७॥**

टीका—भोक्ता कालोऽपेक्षणीयः ग्रीष्मवर्षाशिशिरभेदः । ग्रीष्मे बहुपानकं पातव्यमतः स्वल्पतरं भुङ्क्ते येन भक्तं पानं वाऽक्लेशेनैव जीर्यते । तथा वर्षासु साधारणं भक्तं पानं च यथोदरषड्भाग ऊनो भवति तथा भुङ्क्ते । शिशिरक्षेत्रे शीतबहुले तमेव भुङ्क्ते स्वल्पतरमुदकमापिबति । तथा क्षेत्रं सापेक्षं रूक्षं स्निग्धं शिशिरं च त्रिधा क्षेत्रं । तत्र रूक्षे सुराष्ट्रादौ बहुभक्तभोजी भवति न्यूनोदरषड्भागमात्रम् । स्निग्धे जलबहुलविषये मात्रयाऽभ्यवहारं करोति यथा सुजरं भवति । तथा शिशिरक्षेत्रे शीतबहुले काश्मीरादौ अन्नपरिपाकः सुखो भवति यथा तथाऽभ्यवहर्तव्यम् । मात्रा निजाग्निबलापेक्षा प्रमाणयुक्तोऽप्याहारः कस्यचिन्न क्षमते । अतस्तादृशी मात्रा कर्तव्या या सुजरा भवति । सात्म्येति स्वभावः कस्यचिदत्यन्तस्निग्ध एवाहारः सुखं परिणमते कस्यचिद्रूक्षः कस्यचिन्मध्यः । विरुद्धद्रव्यसंपर्कोऽपि कस्यचित्सुखावहः कस्यचिदसुखकरः । सात्म्यस्यानेकप्रकारत्वात् । द्रव्यं माहिषं दधि क्षीरं वा गुरु । लघु तु गव्यं दधि पयो वा । खंरूखाद्यदध्योदनादीनां विज्ञाय स्वबलं च वातप्रकोपादिव्याधिदूषितमदूषितं च ज्ञात्वा योऽभ्यवहारमन्नादि भुङ्क्ते, किं भेषजैस्तस्येति, न किंचिदौषधैस्तस्य प्रयोजनम् । अनवकाशानि हि तत्र भेषजानीत्यर्थः ॥ १३७ ॥

---

अव०—कालमुष्णकालादि स्निग्धेतरादि च क्षेत्रं सुभिक्षादिकं च । मात्रामल्पादिरूपं सात्म्यं यद्यस्योपभुक्तं परिणतिमेति द्रव्याणां घृतगुडादीनां गुरुत्वं लघुत्वं । यद्वा येन द्रव्येणोपभुक्तेन गुणानां गौरवं शेषाणां लाघवं चात्मनः स्यात् । भोज्यं वस्तु ॥ १३७ ॥

ननु पिंडप्रतिश्रयवस्त्रपात्रादि परिगृह्णन् कथमकिञ्चनः स्या(त्साधुरपरिग्रहो ज्ञे)दित्याह—

**पिंडः शय्या वस्त्रैषणादि पात्रैषणादि यच्चान्यत् । कल्प्याकल्प्यं सद्धर्मदेहरक्षानिमित्तोक्तम् ॥ १३८ ॥**

टीका—पिंड इत्याहारश्चतुर्विधः अशनादिः । शय्या प्रतिश्रयः । वस्त्रं पात्रबन्धचोलपट्टकमुखवस्त्रिकादि । आदिग्रहणाद्वस्त्रग्रहणे यो विधिरुक्तः समर्थः (स सर्वः) परिगृह्यते । पात्रग्रहणात् प्रतिग्रहकमात्रकग्रहणम् । इहाप्यादिग्रहणात् पात्रैषणाविधौ यो विधिरुक्तस्तस्यापि ग्रहणम् । यच्चान्यदित्यौपग्रहिकं दंडकादि संगृहीतं कल्पनीयं तावदुत्सर्गतः सद्धर्मदेहरक्षानिमित्तोक्तम् । देहः शरीरं । सद्धर्मो दशलक्षणकः क्षमादिः । शरीररक्षणे सति सद्धर्मरक्षणं, तन्मूलत्वाद्धर्मानुष्ठानस्य । शरीरकं हि संयमानुष्ठानार्थं पोष्यते, क्षमादेर्धर्मस्याधारस्तदिति । कल्पनीयस्य वाऽलाभे लघुतरदोषासेवनं प्राग्वदाधाकर्मग्रहणम् । एवं शय्यावस्त्रपात्रदंडकादिष्वपि योज्यम् । सर्वे च विषयाः सापवादा मैथुनवर्जम् । एवं सद्धर्मस्य रक्षार्थं च सर्वमुक्तम् । न चासौ परिग्रहः तत्रामूर्छितत्वात्, मूर्छा परिग्रह इति लक्षणादिति ॥ १३८ ॥

एवमुक्ता निष्परिग्रहता, सैव च स्पष्टा पुनः क्रियते—

**कल्प्याकल्प्यविधिज्ञः संविग्नसहायको विनीतात्मा । दोषमलिनेऽपि लोके प्रविहरति मुनिर्निरुपलेपः १३९**

अव०—अन्यदौपग्रहिकं दंडकादि उत्सर्गतः कल्प्यं कल्पनीयं, अपवादतो गाढालंबनेन अकल्प्यमपि ग्राह्यं लघुतरदोषासेवनं सद्धर्मदेहरक्षानिमित्तं कारणं तेनोक्तम् ॥ १३८ ॥ कल्प्याकल्प्यशुद्धाशुद्धविधिज्ञः, संविग्ना ज्ञानक्रियायुक्ताः सहाया यस्य स्वभावविनीतः दूषणदूषितेऽपि रागादिरहितः ॥ १३९ ॥

टीका—कल्पनीयं कल्प्यमुद्गमादिशुद्धं आहारोपधिशय्यादि, उद्गमादिदुष्टं वा अकल्पनीयं तस्य विधिर्विधानं " कल्पनीयेन शरीरकधारणं कुर्यात् असत्यकल्पनीयेनाप्यसति न सता कार्यं यत्नवता प्रावचनेन मार्गेणेत्येष विधिः " तं जानातीति कल्प्याकल्प्यविधिज्ञः । संविग्नसहायकः संविग्नाः संसारभीरवो ज्ञानक्रियायुक्ताः । एवंविधाः सहाया यस्य स संविग्नसहायकः । असहायः सुसहायो वा । विनीतात्मेति विशेषेण नीत आत्मा ज्ञानदर्शनचारित्रोपचारविनयवश्यतां विनीतात्मा । एवंविधः साधुर्दोषमलिनेऽपि लोके मूर्छामलिनेऽपि मनुष्यलोके । रागद्वेषौ वा ताभ्यामयं मलिनो दूषितः सर्वो लोकः । एवंविधलोकमध्यवर्त्यपि प्रकर्षेण विविधमनेकप्रकारं रजो हरति प्रविहरति मुनिः । निर्लेपो रागद्वेषाभ्यामस्पृष्टः । सर्वधनविनाशकारिणा वा लोभेन मूर्छालक्षणेनाग्रस्तो निरुपलेप इति । कर्माबध्नन् पूर्वबद्धमोक्षणाय प्रवर्तत इति ॥१३९॥

कथं पुनर्दोषवल्लोकान्तःपाती तत्कृतसंसर्गो दोषैर्न लिप्यते ? इति आह—

**यद्वत्पंकाधारमपि पंकजं नोपलिप्यते तेन । धर्मोपकरणधृतवपुरपि साधुरलेपकस्तद्वत् ॥ १४० ॥**

टीका—यद्वदिति दृष्टान्तोपन्यासे । यथा पंकाधारं पंकमध्यादुत्पन्नं पंकमध्यस्थितं वा । पंकजं नलिनं । नोपलिप्यते न स्पृश्यते कर्दमेन । धर्मोपकरणधृतवपुरपि तत्तच्छरीरसंरक्षोऽपि सुव्यतिरिक्तजीवकायकृतसंरक्षणश्च साधुरलेपक एव लोभदोषेण न स्पृश्यते, शुद्धाशयत्वादमूर्छितत्वादित्यर्थः ॥ १४० ॥

---

अव०—धर्मोपकरणेन वस्त्रपात्रादिना धृतं वपुरस्य अलेपको लोभेन न स्पृश्यते ॥ १४० ॥

तथापरोऽपि दृष्टान्तः—

**यद्वत्तुरगः सत्स्वप्याभरणविभूषणेष्वनभिसक्तः । तद्वदुपग्रहवानपि न संगमुपयाति निर्ग्रन्थः ॥१४१॥**

टीका—यथा तुरगः सत्स्वपि विभूषणेषु वालव्यजनादिष्वश्वमंडनकेषु वाऽनभिसक्तः अमूर्छितः अकृतगार्ध्यः । न तेन परिग्रहेणासौ परिग्रहवान् । तद्वदिति दृष्टान्तेन समीकरोति दार्ष्टान्तिकमर्थम् । तद्वदुपग्रहवानपि धर्मायोपकरणमुपग्रहः तद्वानपि धर्मोपकरणयुक्तोऽपीत्यर्थः । न संगं स्नेहं मूर्छामुपयाति । अत एव च बाह्यग्रन्थाभावादभ्यन्तरलोभादिग्रन्थाभावाच्च निर्ग्रन्थ इति निर्गतो ग्रन्थो निर्ग्रन्थः ॥ १४१ ॥

कः पुनरयं ग्रन्थ इत्याह—

**ग्रन्थः कर्माष्टविधं मिथ्यात्वाविरतिदुष्टयोगाश्च । तज्जयहेतोरशठं संयतते यः स निर्ग्रंथः ॥ १४२ ॥**

टीका—यस्माद्येन ग्रथ्यते वेष्ट्यते स ग्रन्थः । तच्चाष्टप्रकारं कर्म ज्ञानावरणाद्यन्तरायपर्यवसानम् । मिथ्यात्वाविरतिदुष्टयोगाश्च मिथ्यात्वं तत्त्वार्थाश्रद्धानं, अविरतिरनिवृत्तिः प्राणातिपातादिभ्यः, दुष्टयोगा मनोवाक्कायाः । मिथ्यात्वादयश्चाष्टविधस्य कर्मणो हेतव इति ग्रन्थशब्दवाच्याः । तेषां मिथ्यात्वादीनां जयेऽभिभवे निराकरणे । यतते मायादिशल्यरहितस्तज्जयहेतोस्ताञ्जेष्यामीति सम्यगागमोक्तेन विधिना । स निर्ग्रन्थ इति । एतेन मूलसंघादिदिगंबराः प्रत्युक्ताः ॥१४२॥

---

अव०—अकृतगार्ध्यः धर्मोपकरणयुक्तोऽपि न स्नेहमुपगच्छति निर्ग्रंथो वक्ष्यमाणपरिग्रहरहित इति ॥ १४१ ॥ ग्रन्थोऽष्टविधं कर्म सम्यक्त्वाद्विपरीतं प्राणातिपातादिभ्योऽनिवृत्तिः अशुभमनोवाक्कायाः अशठं मायारहितं सम्यगुद्यच्छति ॥ १४२ ॥

किं पुनः कल्प्यमकल्प्यं चेत्याह—

**यज्ज्ञानशीलतपसामुपग्रहं निग्रहं च दोषाणाम्। कल्पयति निश्चये यत्तत्कल्प्यमकल्प्यमवशेषम् १४३**

टीका—यदिति यस्मात्। ज्ञानं श्रुतमागमः। शीलं मूलोत्तरगुणाः। तपोऽनशनादि द्वादशभेदम्। उपग्रहमुपोद्बलनं संवर्धनम्। निग्रहं च दोषाणाम्। दोषाः क्षुत्पिपासादयः शीतोष्णादयो वा रागद्वेषप्रभृतयो वा। तेषां निग्रहं निराक(क)रणं करोति। कल्पयति समर्थमुपग्रहनिग्रहयोर्भवति। यद्वस्तु आहारोपधिशय्यादि। निश्चये व्यवहारे वा। निश्चयोऽवधिरपवादः। उत्सर्गो व्यवहारो विधिः। तत्कल्प्यम्। यस्मान्निश्चये व्यवहारे। ज्ञानादीनामुपग्रहकारि दोषाणां च निग्रहकारि यद्वस्तु तत् कल्पनीयम्। (अकल्पनीयमग्राह्यं) अवशिष्टमिति॥ १४३॥

एतमेवार्थं स्पष्टयति—

**यत्पुनरुपघातकरं सम्यक्त्वज्ञानशीलयोगानाम्। तत्कल्प्यमप्यकल्प्यं प्रवचनकुत्साकरं यच्च॥ १४४॥**

टीका—उपघातो विनाशस्तं करोति। यद्वस्तु आहारादि गृह्यमाणं प्रत्युतोपहन्ति। सम्यग्दर्शनं सम्यग्ज्ञानं आगमा-

---

अव०—संवर्धनमुपष्टंभं वा व्यवहारे व्यापाररूपे, ज्ञानादीनामुपग्रहकारि, दोषाणां निग्रहकारि, यद्वस्तु तन्निश्चये कल्पनीयं, नावशिष्टम्॥ १४३॥ यद्वस्तु अन्नपानादि, दर्शनज्ञानाचाराहोरात्राभ्यन्तरानुष्ठेयव्यापाराणां विनाशकारि, यच्च प्रवचनकुत्साकारि मद्यमांसकन्दमूलाभोज्यगृहभिक्षाग्रहणादि तत्सर्वं कल्प्यमप्यकल्प्यम्॥ १४४॥

ख्यम् । शीलं मूलगुणोत्तरगुणाश्च । योगा मनोवाक्कायाख्याः । अहर्निशाभ्यन्तरानुष्ठेया वा व्यापारा योगाः । तदुपघातकारित्वात् कल्प्यमपि सदकल्प्यमेव द्रष्टव्यम् । प्रवचनकुत्साकरं यच्च निन्दा गर्हा तां करोति । यत्सर्वमकल्पनीयं मांसमद्यादि अभोज्यादिकुलेषु भक्तपानादिग्रहणम् । सर्वमेव प्रवचनकुत्साकारि भवत्यकल्प्यमिति ॥ १४४ ॥

**किंचिच्छुद्धं कल्प्यमकल्प्यं स्यादकल्प्यमपि कल्प्यम् । पिंडः शय्या वस्त्रं पात्रं वा भैषजाद्यं वा॥१४५॥**

टीका—किंचिदाहाराद्युद्गमादिशुद्धमपि कल्प्यमकल्प्यमेव स्यात् । घृतक्षीरदधिगुडादि विकारहेतुत्वात् । अनर्थापत्तेः परिहार्यम् । तथा अकल्प्यमपि कल्प्यं तदेव, क्षीरघृतादिवा न (स) विकाराणां कल्प्यं जायते । पिंड इत्याहारश्चतुर्विधः । शय्या प्रतिश्रयः । वस्त्रं पात्रं वा भैषजाद्यं वा औषधमपि व्याध्यार्तानां मिश्रं सचेतनं वा कल्पनीयमेव । नीरोगवपुषस्त्वकल्प्यमिति ॥ १४५ ॥

कदा कल्प्यं कदा वाऽकल्प्यमपि (मिति) विभज्यते—

**देशं कालं क्षेत्रं पुरुषमवस्थामुपयोगशुद्धपरिणामान् (पुरुषावस्थोपयोगपरिणामान्)**
**प्रसमीक्ष्य भवति कल्प्यं नैकान्तात्कल्प्यते कल्प्यम् ॥ १४६ ॥**

---

अव०—कल्प्याकल्प्यत्वं शुद्धवस्तुष्वप्यनियतं, पुरुषाद्यपेक्षयेति शेषः, यथा विकारभाजां शुद्धमपि क्षीरादि निषिध्यते, नेतरेषां, नीरुजां भेषजं तदन्येषां कल्प्यतेऽशुद्धमपि ॥ १४५ ॥ देशोऽसाधुपरिचितक्षेत्रं, कालो दुर्भिक्षादिः, पुरुषः प्रव्रजितराजादिः, अवस्था मान्द्यादिका, एतेषामर्थेऽकल्प्यमपि कल्प्यं, उपयोगशुद्धिपरिणामान् नैवैकान्तेन कल्प्यते कल्प्यं, नैवैकान्तेन न कल्प्यतेऽकल्प्यम् ॥ १४६ ॥

टीका—देशं प्राप्य किंचिदकल्प्यमपि कल्प्यं भवति । कालो दुर्भिक्षादिः तत्राप्येवम् । पुरुषो राजादिप्रव्रजितः तदर्थमकल्प्यमपि कल्प्यम् । अवस्था मान्द्यादिका तत्रापि वैद्योपदेशादकल्प्यमपि कल्प्यम् । उपघातः संसक्तदोषः तच्च सक्तुणादिसंसक्तं संग्राह्यं प्रकल्प्यं तदेव चान्यालाभे यत्नात्प्रत्यवेक्ष्य ग्राह्यं कल्प्यमिति । शुद्धपरिणामानिति शुद्धपरिणामं चेतसः सर्वत्र क्रिया गृह्यते । अकल्प्यमपि कल्प्यं भवतीत्येतदेव दर्शयति पश्चार्धेन । प्रसमीक्ष्य सम्यगालोच्य कल्पनीयं गृह्णतः । नैकान्तात् कल्पते कल्प्यमिति न खल्वेकान्तेनैव कल्प्यते जायते कल्प्यम् । अथवा नैकान्तेनैव कल्प्यते कल्प्यम् । अकल्प्यमेकान्तेनैव न न कल्प्यते । न कल्पनीयमकल्प्यमिति । यस्माद्देशकालाद्यपेक्षया कल्प्यमकल्प्यं भवति । अकल्प्यमपि कल्पनीयमिति ॥ १४६ ॥

एवमनैकान्तिकं कल्प्याकल्प्यविधिं निरूप्य योगत्रयनियमनायाह संक्षेपतः—

**तच्चिन्त्यं तद्भाष्यं तत्कार्यं भवति सर्वथा यतिना । नात्मपरोभयबाधकमिह यत्परतश्च सर्वाद्धम् १४७**

टीका—मनसा तदेव चिन्त्यमालोच्यं आर्तरौद्रध्यानद्वयव्युदासेन, यन्नात्मनः परस्योभयस्य वा बाधकं भवति । वाचापि तदेव भाष्यं भाषणीयं, यन्नात्मादीनां बाधकं भवति । कायेनापि धावनवल्गनादिक्रियात्यागेन तदेव कार्यं कर्तव्यं, यन्नात्मादीनां बाधकं भवति । सर्वाद्धमिति अद्धा कालः सर्वकालमित्यर्थः । वर्तमानेऽनागते च । तत्रापि वर्तमानो व्यावहा-

---

अव०—यतिना साधुना तदेव चिन्तनीयं भाषणीयं कायेन कर्तव्यं, यदात्मनः परेषां उभयेषां बाधकं न भवति, अतीतादिसर्वकाले ॥१४७॥

रिकः परिग्राह्यः । अनागतश्च सर्व एव । अतो मनोवाक्कायैः सम्यग्व्यापाराः कार्याः तथा, यथा स्वल्पोऽपि कर्म-
बन्धो न जायत इति ॥ १४७ ॥

संप्रतीन्द्रियनियममाचष्टे—

**सर्वार्थेष्विन्द्रियसंगतेषु वैराग्यमार्गविघ्नेषु । परिसंख्यानं कार्यं कार्यं परमिच्छता नियतम् ॥ १४७ ॥**

टीका—सर्वे च तेऽर्थाश्च शब्दरूपगन्धरसस्पर्शाः । इन्द्रियैः संगताः इन्द्रियाणां गोचरतां गताः तेषु । वैराग्यमार्गवि-
घ्नेषु वैराग्यमार्गः सम्यग्ज्ञानक्रियास्तद्विघ्नेषु तदन्तरायकारिषु शब्दादिविषयेषु । परिसंख्यानं कार्यं इत्वरागतान् शब्दा-
दीन् विज्ञाय निःसारान् आयतावहितान् परिसंख्याय प्रत्याख्याय गोचरवर्तिनोऽपि रागद्वेषवर्जनद्वारेण ज्ञानपरिज्ञया
प्रत्याख्यानपरिज्ञया चेत्युभाभ्यां प्रकाराभ्यां परिसंख्यानं कार्यमित्यर्थः । कस्मात्पुनः संख्यायन्ते गोचरमागता विषयाः
शब्दादय इत्याह—कार्यं परमिच्छता नियतं, कार्यं सकलकर्मक्षयलक्षणो मोक्षः । प्रकृष्टं परं धर्मार्थकाममोक्षाणां । मोक्षा-
ख्यमेव कार्यं परं कार्यम् । कामस्य दुःखात्मकत्वात् दुःखहेतुत्वात् तत्साधनव्यभिचारात् । अर्थस्यार्जनरक्षणक्षयसंगर्हिं-
सादिदोषदर्शनात् अनर्थानुबन्धित्वाच्च नृसुरैश्वर्याणां क्षयातिक्लेशयुक्तत्वात् । अभ्युदयलक्षणस्य धर्मस्यार्थकामफलत्वात्

---

अव०—सर्वेषु शब्दादिसर्वेन्द्रियार्थेषु श्रोत्रादीन्द्रियगणस्य गोचरतां प्राप्तेषु वैराग्यमार्गः सज्ज्ञानक्रियासेवनं तस्मिन्नन्तरायकारिषु परि-
संख्यानमित्वरत्वनि.सारत्वाहितकारित्वपरिज्ञानं कार्यं ध्येयम् । केन परं कामार्थधर्मेषु प्रधानं नियतं शाश्वतं कार्यं मोक्षप्राप्तिलक्षण-
मिच्छताऽभिलाषिणा ॥ १४८ ॥

ङुष्टता सर्वत्र चात्यन्तिकैकान्तिकसुखस्वज्ञावत्वात् परं कार्यं मोङ्कस्तमिञ्चता । नियतं शाश्वतमित्यर्थः । तच्चेञ्चता परं कार्यं। विषयसुखेषु निःस्पृहेण ज्ञवितव्यम् ॥ १४० ॥

निःस्पृहता चानित्यादिभावनायत्तेत्याह–

**ज्ञावयितव्यमनित्यत्वमशरणत्वं तथैकतान्यत्वे । अशुचित्वं संसारः कर्माश्रवसंवरविधिश्च ॥ १४ए ॥**

टीका–ज्ञावयितव्यमहर्निशं चिन्तनीयमज्यसनीयम् । किं तदनित्यत्वं सर्वस्थानान्यशाश्वतानि, संसारे नास्ति किंचिन्नित्यमिति । तथाऽशरणत्वं जन्मजरामरणाज्जिजूतस्य नास्ति क्वचिदपि शरणं । तथा एकत्वज्ञावना एक एवाहमित्यादिका । तथाऽन्यत्वज्ञावना अन्य एवाहं स्वजनेज्यो धनधान्यहिरण्यसुवर्णादेः शरीरकाच्चेति । तथाऽशुचित्वज्ञावना आद्युत्तरकारणाशुचित्वादिका । तथा संसारज्ञावना माता जूत्वा ङुहिता ज्ञार्या स्वामी देशो(द्वेष्यो दासो)ऽशत्रुर्जवतीत्यादिका। तथा कर्माश्रवज्ञावना आश्रवद्वाराणि विवृतानि कर्माश्रवन्तीति विज्ञावयेत् तस्मात् स्थगनीयानि । यथा संवरविधिराश्रवद्वारनिरोधः स्थगननिरुद्धेष्वाश्रवद्वारेषु कर्मागमनिरोधः कृतो ज्ञवति ॥ १४ए ॥

---

अव०–भावयितव्यमहर्निशं चिन्तनीयमभ्यसनीयं किं तदनित्यत्वं, संसारे सर्वस्थानानामशाश्वतत्वं । अशरणत्वं जन्मजरामरणाभिभूतस्य नास्ति किंचिच्छरणं। एकत्वमेक एवाहं। अन्यत्वं स्वजनधनदेहादिकेभ्योऽन्य एवाहं। अशुचित्वमाद्युत्तरकारणाशुचितामयस्य शरीरस्याशुचिभावादशुचित्वं। संसार इति माता भूत्वा भगिनीत्यादिभवभावना । आश्रवद्वाराणि विवृतानि कर्माश्रवः । आश्रवद्वारपिधानं संवरः ॥१४९॥

**निर्जरणलोकविस्तरधर्मस्वाख्याततत्त्वचिन्ताश्च । बोधेः सुदुर्लभत्वं च भावना द्वादश विशुद्धाः ॥१५०॥**

टीका–तथा निर्जरा भावना निरुद्धेषु आश्रवद्वारेषु पूर्वोपात्तस्य कर्मणस्तपसा क्षयो भवतीति । तथा लोकविस्तरभावनामूर्ध्वाधस्तिर्यग्लोकेषु भ्रान्तमनादौ संसारे सर्वत्र विस्तृतं जातं चेति चिन्तयेत् । स्वाख्यातधर्मचिन्तनं क्षमादिदशलक्षणको धर्मः शोभन आख्यातो निर्दोषः भव्यसत्त्वानुग्रहायेति भावयेत् । बोधेश्च दुर्लभता भावनीया मनुष्यजन्मकर्मभूम्यार्यदेशकुलकल्पतायुरुपलब्धौ सत्यामपि सम्यक्त्वज्ञानचरणानि बोधिस्तस्य दुर्लभत्वं अहर्निशं भावयेत् । एवमेता द्वादश भावनाः सततमनुप्रेक्ष्याः ॥ १५० ॥

संप्रत्येकैकया कारिकया भावनामेकैकां कथयति । तत्र प्रथमा भावनाऽनित्याख्या तद्दर्शयन्नाह–

**इष्टजनसंप्रयोगर्द्धिविषयसुखसंपदस्तथारोग्यम् । देहश्च यौवनं जीवितं च सर्वाण्यनित्यानि ॥ १५१ ॥**

टीका–इष्टेन जनेन सह संयोगोऽनित्यः । ऋद्धिः संपद्विभूतिः साप्यनित्या । विषयाः शब्दादयस्तज्जनिता सुखसंपदनित्या । आरोग्यं नीरोगता तदप्यनित्यं । देहः शरीरकं आहारस्नानपानाच्छादनानुगृहीतमेतदप्यनित्यम् । यौवनमपि कतिपयदिवसरमणीयम् । जीवितमप्यकाण्डभंगुरम् । एवमेतत्सर्वमनित्यमिति भावयतो न क्वचित् स्नेहः समुपजायते । निःसंगश्च मोक्षचिन्तायां व्याप्रियत इति ॥ १५१ ॥

---

अव०–कर्मणां क्षपणोपायो निर्जरणं, लोकायामादिलोकविस्तरः शोभनोऽयं धर्मस्तत्त्वतः परमार्थतश्चिन्ता धर्मस्वाख्याततत्त्वचिन्ताः बोधेः सुदुर्लभत्वं चेति प्रकटम् ॥ १५० ॥ इष्टजनसंप्रयोगश्च ऋद्धिसंपच्च विषयसुखसंपच्च संपच्छब्दः प्रत्येकं योज्यः ॥ १५१ ॥

अशरणभावनामधिकृत्याह—

**जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते । जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥१५२॥**

टीका—जन्मोत्पत्तिः । जरा वयोहानिः । मरणं प्राणपरित्यागः । एभ्यो भयानि तैरभिद्रुतेऽभिभूते । व्याधयो ज्वरातीसारहृद्रोगादयः । वेदनाः शरीरजा मनोभवाश्च । व्याधिवेदनाग्रस्ते व्याधिवेदनाभिगृहीते लोके प्राणिसमूहे । जिनवरा जिनप्रधानास्तीर्थंकरा इत्यर्थः । तेषां वचनं वाग्योगस्तत्प्रतिपादितोऽर्थस्तमादाय क्षायोपशमिकभाववर्तिभिर्गणधरैर्दृब्धं द्वादशांगं प्रवचनं, तन्मुक्त्वाऽन्यत्र नास्ति शरणं त्राणमिति ॥ १५२ ॥

एकत्वभावनामधिकृत्याह—

**एकस्य जन्ममरणे गतयश्च शुभाशुभा भवावर्ते । तस्मादाकालिकहितमेकेनैवात्मनः कार्यम् ॥१५३॥**

टीका—एकस्येत्यसहायस्य जन्म च मरणं च । न खल्वस्य जायमानस्य म्रियमाणस्य वा कश्चित्सहायोऽस्ति । गतयो नारकाद्या मरणोत्तरकालं नरकादिगतिषु स्वकृतकर्मफलमनुभवतो नास्ति कश्चित्परः । शुभा देवमनुष्यतिर्यग्योनयः । नरकगतिरशुभा । भवो जन्म । भव एवावर्तः संसारार्णवो यत्र प्रदेशे भ्राम्यदस्ताघजलं तत्रैव तत्रैव च स आवर्तः । जीवस्यापि तत्र तत्र जन्ममरणे समनुभवतो भवावर्तः । तस्मादाकालिकं अकालहीनं । हितमेकेनैवात्मनः कार्यम् । हितं संयमानुष्ठानं तत्प्राप्यो वा मोक्षोऽत्यन्तहितं, एकेन असहायेनात्मना कर्तव्यमिति ॥ १५३ ॥

---

अव०—अभिद्रुतेऽभिभूते ॥ १५२ ॥ आकालिकहितं सदा भाविशुभाचरणं, एकेनैवात्मनाऽसहायेन स्वस्यार्थे ॥ १५३ ॥

अन्यत्वभावनामधिकृत्याह—

**अन्योऽहं स्वजनात्परिजनाच्च विभवाच्छरीरकाच्चेति। यस्य नियता मतिरियं न बाधते तं हि शोककलिः॥**

टीका—स्वो जनः स्वजनो मातापित्रादिः पत्नीपुत्रादिश्च। अस्मादहमन्यो विभिन्नः पृथक्कर्मा। परिजनो दासदासीप्रभृतिः। अस्माच्च परिजनादन्य एवाहं। विभवो धनधान्यादिः कनकरजतवस्त्रादिर्वा अस्मादन्योऽहं शरीरकमुपभोगाधिष्ठानं, तस्मादप्यत्यन्तभिन्न एवाहं। इत्थं यस्येयं बुद्धिर्नियता नक्तंदिनमालोचिका। न बाधते तं न पीडयति। हिशब्दो यस्मादर्थे। यत्तदोर्नित्याभिसंबन्धात्। यस्मादेवं भावयन्न बाध्यते शोककलिना, तस्मादन्यतरभावना कार्या ॥ १५४ ॥

अशुचित्वभावनामधिकृत्याह—

**अशुचिकरणसामर्थ्यादाद्युत्तरकारणाशुचित्वाच्च। देहस्याशुचिभावः स्थाने स्थाने भवति चिन्त्यः॥१५५॥**

टीका—शुचिनोऽपि द्रव्यस्याशुचित्वकरणमस्ति सामर्थ्यं शक्तिर्देहस्य। कर्पूरचन्दनागरुकुंकुमादिद्रव्यं देहसंपर्कादशुच्येव जायते। तस्मादशुचिकरणसामर्थ्याद्देहस्याशुचित्वमनुचिन्तनीयं। यथाह— एतावदेतदशुचि नाऽन्यत् किंचिन्न विद्यते।

अव०—स्वजनात् पित्रादेः, परिजनाद्दासादेः, विभवात्कनकादेः, शरीराद्देहाच्च, तेभ्यो भिन्नोऽहं, पृथक्कर्मणि यस्य नियता नक्तंदिनमालोचिका, हिर्यस्मात्, शोककलिः कलिकालस्वरूपम् ॥ १५४ ॥ कर्पूरादीनां वपुःसंपर्कादशुचिकरणसामर्थ्यात्। शुक्रशोणिताद्याद्यकारणानामन्नपानाद्युत्तरकारणानामशुचित्वात् ॥ १५५ ॥

यथा कायः कलेरंगं, यद्वा तेनैव दूषितं" । आद्युत्तरकारणाशुचित्वाच्च । आदिकारणं शुक्रशोणिते। उत्तरकारणं जनन्याभ्यवहृतस्याहारस्य रसहरण्योपनीतस्य रसस्यास्वादनमत्यन्ताशुचि। एवमाद्युत्तरकारणयोरशुचित्वादशुचिर्देह इति प्रतिक्षणमनुचिन्तनीयम् । स्थाने स्थाने इति शिरःकपालादिष्ववयवेषु चरणान्तेषु त्वगाच्छादितासृग्मांसमेदोमज्जास्थिस्नायुजालसन्तानबन्धेषु न क्वचिच्छुचिगन्धोऽस्तीत्यशुचिगन्ध एव विजृंभते इति ॥ १५५ ॥

संसारभावनामधिकृत्याह—

**माता भूत्वा दुहिता भगिनी भार्या च भवति संसारे। व्रजति सुतः पितृतां भ्रातृतां पुनः शत्रुतां चैव १५६॥**

टीका—संसारे परिभ्रमतां सत्त्वानां माता भूत्वा भूयः सैव दुहिता भवति, सैव च पुनर्भार्या, सैव च संसृतौ परिवर्तमाना जामिरपि भवति। तथा पुत्रो भूत्वा पिता भवति । स एव सुतः पुनर्भ्रातृत्वमायाति । स एव च पुनः सपत्नो भवतीत्येवमाजवंजवीभावे प्राये संसारे सर्वसत्त्वाः पितृत्वेन मातृत्वेन पुत्रत्वेन शत्रुत्वेन चेत्यादिना संबन्धेन कृतसंबन्धा बभूवुरिति १५६

आश्रवभावनामधिकृत्याह—

**मिथ्यादृष्टिरविरतः प्रमादवान् यः कषायदंडरुचिः। तस्य तथाश्रवकर्मणि यतेत तन्निग्रहे तस्मात् ॥१५७॥**

---

अव०—संसारभावनामाह—दुहिता सुता ॥ १५६ ॥ स सम्यग्दृष्टिरपि न विरतः प्राणातिपातात् सोऽपि, प्रमादवान् । मनोदंडाः ४ वाग्दंडाः ४ कायदंडाः ४ । तदेवं पञ्चदशप्रकारदंडरुचिः ततश्चायमर्थः प्रमादवान् यो जीवस्तस्य यथैते भेदा बहवस्तथाश्रवकर्माणि आश्रवस्थानानि भवन्तीति । आश्रवविधिरुक्तस्तस्मिन्नाश्रवकर्मणि विषये तेषां भेदानां निग्रहे यतेत ॥ १५७ ॥

टीका–मिथ्यादर्शनादयः कर्मण आश्रवाः । तत्त्वार्थाश्रद्धानलक्षणो मिथ्यादृष्टिः । मिथ्यादर्शनोदयाच्च कर्मबन्धः । अविरतः सम्यग्दृष्टिरपि यो न विरतः कुतश्चित्प्राणातिपातदोषादसावपि कर्माश्रवेषु वर्तते । सम्यग्दृष्टिर्विरतोऽपि यः प्रमादवान् सोऽपि कर्म श्रवत्यादत्ते । प्रमादश्च निद्राविषयकषायविकटविकथाख्यः पञ्चधा । अनेन प्रमादेन युक्तः कर्म बध्नाति । कषायप्रमादो गरीयानिति भेदेनोपादानं । दंडस्त्रिधा मनोवाक्कायाख्यः । मनसार्तरौद्राध्यवसायः कर्माश्रवति । वाचापि हिंसकपरुषादितया कर्म बध्नाति । कायेनापि धावनवल्गनप्लवनादिरूपेण कर्मादीयते । दंडयन्तीति दंडाः । मन एव दंडयत्यात्मानं, एवमितरावपि । तस्याश्रवहेतोः कर्मणि क्रियायां यतेत यत्नं कुर्वीत । तेषामाश्रवाणां निग्रहो निरासस्तस्माद्यत्नादिति । विवृतान्याश्रवद्वाराणि यथा न संभवन्ति तथा यतेत ॥ १५७ ॥

संवरभावनामधिकृत्याह–

**या पुण्यपापयोरग्रहणे वाक्कायमानसी वृत्तिः । सुसमाहितो हितः संवरो वरदेशितश्चिन्त्यः ॥१५८॥**

टीका–पुण्यकर्म सातादि । पापं ज्ञानावरणादि । तयोः पुण्यपापयोरग्रहणेऽनुपादाने । वाक्कायमानसी वृत्तिर्या व्यापार इत्यर्थः । अग्रहणं च संवृताश्रवद्वारस्य भवति, न पुनः पुण्यमादत्ते न पापं । सुसमाहितः सुष्ठु समाहितः । आत्मन्यारोपितहितश्च । आयत्यां तदायत्ते च-संवर आश्रवनिरोधलक्षणः । वरदास्तीर्थकृतः । ईप्सितार्थप्रदानाद्वरदाः । मोक्षार्थश्चेप्सितः । स चिन्तनीयो भावनीय इत्यर्थः ॥ १५८ ॥

अव०–अनुपादाने वृत्तिर्व्यापारः । पाठान्तरे गुप्तिर्गोपनं । आत्मन्यारोपितहितः । वरदैस्तीर्थकरादिभिः ॥ १५८ ॥

निर्जराभावनामधिकृत्याह—

**यद्वद्विशोषणादुपचितोऽपि यत्नेन जीर्यते दोषः। तद्वत्कर्मोपचितं निर्जरयति संवृतस्तपसा ॥ १५९॥**

टीका—कथं पुनः संवृतात्मनः कर्मनिर्जरणमिति दर्शयति—निरुद्धेष्वाश्रवद्वारेषु संवृतात्मनोऽपूर्वकर्मप्रवेशो नास्ति, पूर्वोपात्तस्य च कर्मणः प्रतिक्षणं क्षयस्तपस्यतो भवति। यथोपचितस्याजीर्णस्य आमविदग्धविष्टब्धरसशेषलक्षणस्य आहारनिरोधे सति। विशोषणाद्यः प्रतिदिवसं क्षयो भवति प्रयत्नेन दोषाणामादीनां, तद्वत्कर्मापि ज्ञानावरणादि चितं संसृतौ भ्रमता चतुर्थकाष्टमदशमद्वादशादिभिस्तपोविशेषैर्नीरसीकरोति। नीरसीकृतं च निरनुभाव्यं निष्पीडितकुसुम्भवत् परिशटत्यात्मप्रदेशेभ्य इति ॥ १५९ ॥

लोकभावनामधिकृत्याह—

**लोकस्याधस्तिर्यक्त्वं चिन्तयेदूर्ध्वमपि च बाहल्यम्। सर्वत्र जन्ममरणे रूपिद्रव्योपयोगांश्च ॥१६०॥**

टीका—जीवाजीवाधारक्षेत्रं लोकः, तस्याधस्तिर्यगूर्ध्वञ्च चिन्तयेत्। बाहल्यं विस्तरं। अधः सप्तरज्जुप्रमाणो विस्तीर्ण-

---

अव०—विशोषणाल्लंघनात्। उपचितोऽपि पुष्टोऽपि। दोषोऽजीर्णात्मकः। तत्कर्मोपचितं बन्धादिभिः निरुद्धाश्रवद्वारो जीवः संवृतः ॥ १५९ ॥ सर्वत्र यत्र न जातं न मृतं मयेति। परमाणुप्रभृतीन्यनन्तानन्तस्कन्धपर्यवसानानि द्रव्याणि। तेषां मनोवाक्कायादिभिरुपयोगाः। न च तैस्तृप्त इति चिन्तयेत् ॥ १६० ॥

तथा लोकः । तिर्यग् रज्जुप्रमाणः । ऊर्ध्वं ब्रह्मलोके पञ्चरज्जुप्रमाणः । पर्यन्ते रज्जुप्रमाण इति । अधःशब्दादूर्ध्वाधश्चतुर्दशरज्जुप्रमाणः । सर्वत्र लोके जन्ममरणे समनुभूते व्यापकमधिकरणं, नास्ति तिलतुषप्रमितोऽपि लोकाकाशदेशो यत्र न जातं न मृतं वा मयेति । रूपिद्रव्योपयोगांश्चेति रूपीणि यानि द्रव्याणि परमाणुप्रभृतीन्यनन्तानन्तस्कन्धपर्यवसानानि, तेषां य उपयोगः परिभोगो मनोवाक्कायाहारोच्छ्वासनिश्वासादिरूपेण सर्वेषां कृतोऽनादौ संपर्यटता चास्मि न तृप्त इत्यनुक्षणमनुचिन्तयेदिति ॥ १६० ॥

स्वाख्यातधर्मभावनामधिकृत्याह–

**धर्मोऽयं स्वाख्यातो जगद्धितार्थं जिनैर्जितारिगणैः । येऽत्र रतास्ते संसारसागरं लीलयोत्तीर्णाः १६१**

टीका–श्रुतधर्मश्चारित्रधर्मश्च सुष्ठु निर्दोषमाख्यातः । किमर्थमाख्यात इत्याह–जगद्धितार्थं, जगच्छब्देन प्राणिनोऽभिधित्सिता जगद्भ्यः प्राणिभ्यो हितमेतदिति । प्रतिविशिष्टं प्रयोजनमुद्दिश्याख्यातः । जिनैस्तीर्थकृद्भिः । अरयः क्रोधादिपरीषहकर्माख्याः । जितोऽभिभूतो निराकृतोऽरिगणो यैस्ते जितारिगणाः । इत्थंलक्षणे च धर्मे आगमरूपे क्षमादिलक्षणे च । ये रताः सक्तास्ते संसारसागरं लीलया अनायासेन सुखपरंपरया । उत्तीर्णाः परं पारमुपगताः । मोक्षं प्राप्ता इत्यर्थः ॥ १६१ ॥

---

अव०–सुष्ठु निर्दोषः ख्यातः क्षमादिलक्षणधर्मे सुखपरंपरया ॥ १६१ ॥

दुर्लभबोधित्वभावनामधिकृत्याह—

**मानुष्यकर्मभूम्यार्यदेशकुलकल्पतायुरुपलब्धौ । श्रद्धाकथकश्रवणेषु सत्स्वपि सुदुर्लभा बोधिः ॥ १६२ ॥**

टीका—प्राक्तावन्मानुषजन्मैव दुर्लभं चोल्लकादिदृष्टान्तदशकेन विभावनीयं । सति च मानुषजन्मनि कर्मभूमिः सुदुर्लभा । कर्मभूमिरपि यत्र तीर्थकृत उत्पद्यन्ते सद्धर्मदेशनाप्रवणाः परिनिर्वाणं प्राप्नुवन्ति भव्याः पंच भरतानि पञ्चैरावतानि विदेहाश्च पञ्चैव । मानुषत्वे कर्मभूमौ च सत्यां आर्यो देशो मगधो वंगकलिंगादिर्वा दुर्लभः । सत्स्वेतेषु त्रिषु कुलमन्वयविशुद्धिर्दुर्लभा । इक्ष्वाकुहरिवंशादि कुलं । एतेष्वपि कुलपर्यन्तेषु लब्धेषु कल्पता नीरोगता दुर्लभा । एतेषु च कल्पतान्तेषु अवाप्तेषु दीर्घमायुर्दुर्लभं । आयुष्कान्तेषु च समासादितेषु श्रद्धा धर्मजिज्ञासा दुर्लभा । सत्यामपि जिज्ञासायां कथकः सद्धर्मस्याख्याता दुर्लभः । सत्यपि कथके श्रवणमाकर्णनं प्रस्तावाभावात् दुर्लभं, अनेकगृहकार्यव्यग्रत्वात् आलस्यमोहावज्ञामदप्रमादकृपणत्वभयशोकाज्ञानकुतूहलादिभिश्च श्रवणं प्रति न प्रवृत्तिर्भवति । सत्स्वप्येतेषु श्रवणपर्यन्तेषु प्राप्तेष्वपि सुदुर्लभा बोधिर्भवति । बोधिः सम्यग्दर्शनसम्यग्ज्ञानलाभः । तत्सम्यक्त्वं शंकादिशल्यरहितं सुदुर्लभं भवतीत्यर्थः ॥ १६२ ॥

---

अव०—कल्पता नीरोगता । आयुर्दीर्घायुष्कं । श्रद्धा धर्मजिज्ञासा । कथकश्चाचार्यः । श्रवणं चाकर्णनं । एतेषु नवसु उत्तरोत्तरदुर्लभेषु सत्स्वपि । बोधिः सद्धर्मस्याख्याता । सम्यग्दर्शनं सम्यग्लाभो भवति ॥ १६२ ॥

**तां दुर्लभां भवशतैर्लब्ध्वाप्यतिदुर्लभा पुनर्विरतिः। मोहाद्रागात्कापथविलोकनाद्गौरववशाच्च ॥१६३॥**

टीका–तां दुर्लभां सम्यग्दर्शनादिकां बोधिमवाप्य । भूयोऽपि दुर्लभा विरतिः सर्वविरतिर्देशविरतिश्च । किं पुनः कारणं सम्यक्त्वलाभे सति विरतिर्दुर्लभेत्याह–मोहोऽज्ञानं मोह इदं कृत्वा इदं चानुष्ठाय ततः प्रव्रजिष्यामीति, श्रावकधर्मं वा प्रतिपत्स्ये न सर्वत्यागं कर्तुं शक्नोमीत्येतदज्ञानं । नेदमवगच्छत्यकाण्डभंगुरमिदं जीवितं सहसैव ध्वंसते नाम (प)-प्रस्तावं प्रतीक्षत इति । रागाद्वा न लभते विरतिं । पत्नीपुत्रादिषु अनुरक्तहृदयो न शक्नोति त्यक्तुं गृहवासरतिं । कुत्सिताः पंथानः कापथाः तैर्विलोकनं चित्तभ्रमः । कः पुनरत्र पन्थाः संसारादुत्तारणे क्षम इति कापथजनितभ्रान्तिदर्शनादपि भ्रंशमवाप्नोति । दूरतर एव चारित्रलाभः । गौरववशाच्चेति गौरवमादरः शक्तिः । ऋद्धिरससुखेषु ऋद्धिर्विभूतिः महती द्रव्यसंपत् तां हातुं न शक्नोति लोभकषायानुगतचेताः। रसेष्वभीष्टेषु तिक्तादिषु शक्तिरादरो गौरवं तं न शक्नोति हातुं रसनेन्द्रियवशीकरणात् । सुखगौरवं यथर्तुव्यपेक्षं प्रवातनिवातसाधारणशय्यासु शयनाहारं इष्टचन्दनादिविलेपनं गन्धधूपमाल्यादिसेवनमिष्टस्त्रीपरिभोगश्च तदप्रत्यलः परिहर्तुम् । अतो बोधिलाभे सत्यपि सर्वविरतिर्दुर्लभेत्युक्तम् ॥ १६३ ॥

---

अव०–अवाप्य अज्ञानात् रागात् पत्नीपुत्राद्यासक्तेः कापथविलोकनात् कुपथदर्शनात् एकैकनयानुसारिजिनप्रणीतागमवचनैकदेशस्वयुक्तिनिरपेक्षविचारणाद्बहवो निह्नवा जज्ञिरे गौरववशात् ॥ १६३ ॥

**तत्प्राप्य विरतिरत्नं विरागमार्गविजयो दुरधिगम्यः। इन्द्रियकषायगौरवपरीषहसपत्नविधुरेण ॥१६४॥**

टीका—सकलं विरतिरत्नं प्राप्य यदुक्तं पूर्वं दुर्लभं तदवाप्य सर्वविरतिरत्नं । विरागमार्गविजयो दुरधिगम्यः । विरागस्य मार्गो रागप्रहाणमार्गः यथोक्तलक्षणः शास्त्रे "हिंसादिष्विहामुत्र चापायावद्यदर्शनं । दुःखमेव वेत्यादि" एवंलक्षणकस्य विरागमार्गस्य विजयः परिचयोऽभ्यसनं । अधिगम्यते प्राप्यतेऽधिगम्यः, दुःखेनाधिगम्यो दुःप्राप्य इत्यर्थः । कस्मात् पुनर्दुःखेनाधिगम्यत इत्याह—इन्द्रियाणि परिपन्थानि विरागमार्गस्य विघ्नकरणानि । कषायाः क्रोधादयः सपत्नाः शत्रवः परिपन्थिनः । गौरवमुक्तलक्षणं त्रिधा ऋद्धिरससाताख्यं । क्षुत्पिपासादयः परिषहाः ते चानन्यतुल्याः सपत्नाः । एभिरिन्द्रियादिभिः सपत्नैर्विधुरो विसंस्थुल आकुलीकृतः न वैराग्यमार्गमभ्यसितुं समर्थो भवति । इन्द्रियादिसपत्नविधुरेण न शक्यते विरागमार्गविजयः कर्तुमिति ॥ १६४ ॥

**तस्मात्परीषहेन्द्रियगौरवगणनायकान् कषायरिपून्। क्षान्तिबलमार्दवार्जवसन्तोषैः साधयेद्धीरः॥१६५॥**

टीका—यस्मादेते रिपवो बलिनः कषायगणनायकाः । तस्मात्कषायानेव पूर्वं नायकानिन्द्रियादीनां विजयेत । जितेषु च नायकेषु हतं सैन्यमनायकमिन्द्रियादीनि । गणशब्दः प्रत्येकमभिसंबध्यते इन्द्रियगणस्य परीषहगणस्य गौरवगणस्य च

---

अव०—रागप्रहाणमार्गो दुःखेनाधिगम्यः इन्द्रियादिसंपन्नः वैरिविह्वलेन विरागमार्गप्राप्तौ विजयस्तेन प्राप्तो भवति, येन सर्वविरतिरवाप्नोति ॥ १६४ ॥ गणशब्दः प्रत्येकमभिसंबध्यते, नेतारः तान् कषायान् पूर्वं हतं सैन्यमनायकमिति न्यायात् ॥ १६५ ॥

नायकाः प्रवर्तका नेतारः । तान् कषायान् वैरिणः क्षान्तिबलमार्दवार्जवसन्तोषैर्यथासंख्यं साधयेद्धीरः । बलशब्दः प्रत्येकमभिसंबध्यते क्षान्तिबलेन मार्दवबलेन आर्जवबलेन सन्तोषबलेन चतुरंगबलेनामुना बलेन साधयेत् उत्थितान् विरागमार्गाद्धीरः सात्विक इत्यर्थः । यथासंख्यं क्रोधादयो रिपवः क्षान्त्यादिबलैः साध्या भवन्ति ॥ १६५ ॥

**संचिन्त्य कषायाणामुदयनिमित्तमुपशान्तिहेतुं च । त्रिकरणशुद्धमपि तयोः परिहारासेवने कार्ये१६६**

टीका—कषायाणामुदयनिमित्तमालोच्य क्रोधादीनामनेकनिमित्तेन अयं क्रोधादिकपायो जायत इति । उपशान्तिहेतुं च संचिन्त्य अनेन क्रियमाणेनायमुपशाम्यति कषायः प्रशमं गच्छति । अतस्तयोरुदयनिमित्तप्रशमहेत्वोर्यथासंख्यं परिहार आसेवनं च कार्यं । परिहारोऽपि कार्यः कायवाग्मनोभिः कृतकारितानुमतिभिश्च । उदयनिमित्तस्योपशान्तिहेतूनामपि कृतकारितानुमतिभिः कषा(का)यादिभिश्चासेवनं । त्रिकरणशुद्धं कार्यमिति रागद्वेषमोहानां निवारणार्थम् ॥१६६॥

**सेव्यः क्षान्तिर्मार्दवमार्जवशौचे च संयमत्यागौ । सत्यतपोब्रह्माकिंचन्यानीत्येष धर्मविधिः ॥ १६७ ॥**

टीका—सेव्योऽनुष्ठेयो दशविधो धर्मः । तान् दश भेदान् नामग्राहमाचष्टे । क्षान्तिः 'क्षमूष्' सहने क्षमितव्याः

---

अव०—संचिन्त्यालोच्य उदयनिमित्तं प्रादुर्भावकारणं उपशान्तेर्हेतुः कारणं च कषायाणामुदयनिमित्तं परिहार्यमुपशान्तिहेतुरासेवनीयः, कथं त्रिकरणशुद्धं कायवाङ्मनोनिर्दोषं, अपिरभ्युच्चये ॥ इति भावनाधिकारः ॥ १६६ ॥ शौचं संयमं प्रति निर्लेपता अदत्तादानापरिग्रहो वा । चः समुच्चये । संयमः सप्तदशभेदः । त्यागो द्रव्यभावग्रन्थत्यजनम् ॥ १६७ ॥

सोढव्याः आक्रोशप्रहारादयः। मार्दवं मानविजयस्तद्दत्तापनोदः। आर्जवं ऋजुता यथाचरिताख्यायिता। शुचिर्भावः शौचं।(अलोभता विगततृष्णत्वं)। संयमः पञ्चाश्रवादिविरमणं पृथिवीकायसंयमादिर्वा सप्तदशभेदः। वधबन्धनादि-त्यागः प्रासुकैषणीयं वा साधुभ्यो भक्तपानवस्त्रपात्रादिदानं यतिरेव ददाति स च त्यागः। सत्यं सद्भ्यो हितं सत्यं, तच्चापि संवादनादिचतुर्विधं। तपो द्वादशभेदं अनशनादिकं। ब्रह्म अब्रह्मणो निवृत्तिः मैथुननिवृत्तिरित्यर्थः। अकिंचनस्य भाव आकिंचन्यं निष्परिग्रहता। धर्मोपकरणादृते नान्यत् किंचन परिग्राह्यं। एष धर्मस्य त्रिविधिर्भेद इत्यर्थः ॥ १६७ ॥

क्षान्तेः प्राधान्यं प्रदर्शयन्नाह–

**धर्मस्य दया मूलं न चाक्षमावान् दयां समादत्ते। तस्माद्यः क्षान्तिपरः स साधयत्युत्तमं धर्मम् ॥१६८॥**

टीका–योऽयं दशप्रकारो धर्मस्तस्य धर्मस्य दया मूलं। दया प्राणिनां रक्षाऽहिंसेत्यर्थः। सा मूलं प्रतिष्ठा, धर्मस्याहिंसादिलक्षणत्वात्। प्राणिप्राणरक्षणार्थश्चाशेषव्रतोपदेशः। न चाक्षमावान् दयां समादत्ते। अविद्यमानक्षान्तिरक्षमः, नासौ दयां समादत्ते, न संगृह्णातीति। क्रोधाविष्टो हि न कश्चिदपेक्षते चेतनमचेतनं वा ऐहिकमामुष्मिकं वा प्रत्यवायं। तस्माद्यः क्षमाप्रधानः क्षान्त्या वा प्रकृष्टः स साधयत्याराधयति। दशलक्षणमुत्तमं धर्ममिति ॥ १६८ ॥

---

अव०–क्षमाप्रधानः ॥ १६८ ॥

मार्दवमधिकृत्याह—

**विनयायत्ताश्च गुणाः सर्वे विनयश्च मार्दवायत्तः। यस्मिन्मार्दवमखिलं स सर्वगुणभाक्त्वमाप्नोति॥१६९॥**

टीका—विनयो ज्ञानदर्शनचारित्रोपचाराख्यः । तदायत्ता गुणाः । स च विनयो मार्दवायत्तः । मार्दवं च मानविजयः । गर्वे निराकृते उपचारविनयोऽभ्युत्थानाञ्जलिप्रग्रहादिकः शक्यः कर्तुम् । यत्र च पुरुषे मार्दवमखिलं जात्यादिमदाष्टकनिराकारि स सर्वगुणभाग्भवति । ज्ञानदर्शनचारित्रसाध्याः सर्वे गुणास्तत्र संभवन्तीति । तस्मान्मानं निराकृत्य मार्दवमासेवनीयम् ॥ १६९ ॥

मायामधिकृत्याह—

**नानार्जवो विशुध्यति न धर्ममाराधयत्यशुद्धात्मा । धर्मादृते न मोक्षो मोक्षात्परं सुखं नान्यत् ॥१७०॥**

टीका—माया शाठ्यं कौटिल्यं, तत्प्रतिपक्षमार्जवं ऋजुता यथाचेष्टितं तथाख्याति, न किंचिदपह्नुते । यस्तु तथा न करोति, स खल्वनार्जवः, तस्य च शुद्धिर्नास्ति । तस्माद्यथाख्यातापराधप्रतिपन्नप्रायश्चित्तस्य शुद्धिर्जायते । तद्विपरीतस्य न जातुचिच्छुद्धिः । न चाशुद्धात्मा धर्ममाराधयति क्षमादिकं । न चामुं धर्ममन्तरेण मोक्षावाप्तिः । न च मोक्षावाप्तिमन्तरेणैकान्तिकात्यन्तिकादिसुखलाभ इति । तस्मादृजुना भवितव्यमालोचनादाविति ॥ १७० ॥

---

अव०—गुर्वभ्युत्थानाद्यधीना गुणा ज्ञानादयः । यस्मिन् पुरुषे ॥ १६९ ॥ यथाचेष्टितं तथाख्याति । तस्य च शुद्धिर्नास्ति ॥ १७० ॥

शौचमधिकृत्याह—

यद्द्रव्योपकरणभक्तपानदेहाधिकारकं शौचम्। तद्भवति भावशौचानुपरोधाद्यत्नतः कार्यम् ॥ १७१ ॥

टीका—द्विविधं शौचं द्रव्यभावभेदात्। तत्र द्रव्यशौचं बाह्यद्रव्यं। बाह्यद्रव्यं च सचेतनमचेतनं वा शैक्षादि "अट्ठार-स पुरिसेसु वीसं इत्थीसु दस नपुंसेसु। पव्वावणा अणरिहा अणहा पुण ईत्थिआ चेव ॥ १ ॥" इत्यादि सदोषत्वात्या-ज्यम्। उपकरणमुपकारि ज्ञानादीनाम्। तच्चोद्गमादिशुद्धं शुचि भवति, अन्यथाऽशुचीति। तथा भक्तपानमप्युद्गमादि-दोषरहितं शुचि, अन्यथाऽशुचीति। देहशौचं तु पुरीषाद्युत्सर्गपूर्वकं निर्लेपं निर्गन्धं चेति। एतानि प्रयोजनान्यधिकृत्य यत्प्रवृत्तं तदधिकारकं तद्भवति तत् कार्यं कर्तव्यं भवतीति। भावशौचस्यानुपरोधादबाधनात्। यत्नत इति प्रयत्नतः परीक्ष्य सचेतनमितरद्वा उपकरणादि मलप्रक्षालनादिष्वपि प्रवचनोक्तेन विधिनाऽनुष्ठेयम्। भावशौचं तु निर्लोभता। लोभकषायानुरञ्जितो दुःप्रक्षाल इति तत्प्रक्षालनं च परमार्थतो भावशौचमिति ॥ १७१ ॥

---

अव०—द्रव्यं सचेतनादि शैक्षादि सचेतनादि—" अट्ठारस पुरिसेसु वीसं इत्थीसु दस नपुंसेसु। पव्वावणा अणरिहा अणहा पुण इत्थिआ नेव त्ति ( अहवा विगलंगरूवाइंति ) ॥ १ ॥ " उपकरोति ज्ञानादीनां तदप्युद्गमादिशुद्धं शुचि। तथा भक्तपानादि तदुद्ग-मादिदोषरहितं शुचि। अन्यदशुचि। देहशुचि पुरीषाद्युत्सर्गपूर्वकं निर्लेपं निर्गन्धं देहमधिकृत्य प्रवृत्तं। भावशौचं निर्लोभताविधायि कार्यं कर्तव्यम् ॥ १७१ ॥ १ क्लीनपुंसकं नाश्रित्यैव पुनर्निषेधस्तदत्यंतप्रतिषेधाय।

संयममधिकृत्याह । सम्यगुपरमः पापस्थानेभ्यः संयमः सप्तदशप्रकारः—

**पञ्चाश्रवाद्विरमणं पञ्चेन्द्रियनिग्रहश्च कषायजयः । दंडत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥ १७२ ॥**

टीका—पञ्चाश्रवाः प्राणातिपातमृषाभाषणादत्तादानमैथुनपरिग्रहाः कर्मादानहेतवस्तेभ्यो विरमणं विरतिकरणं संयमः । पञ्चेन्द्रियाणि स्पर्शनादीनि तेषां निग्रहः नियमनं निरोधः । शब्दादिषु गोचरप्राप्तेष्वरक्तद्विष्टता माध्यस्थ्यम् । कषः संसारः कष्यते यत्र जीवः स्वकृतैः कर्मभिः कदर्थ्यते पीड्यते तस्यायाः प्राप्तिहेतवः क्रोधादयश्चत्वारस्तेषां जयोऽभिभव उदयनि-रोधः, उदितानां वा विफलतापादनम् । दंडा मनोवाक्कायाख्याः । अभिद्रोहाभिमानेर्ष्यादिलक्षणो मनोदंडः । हिंस्रप-रुषानृतादिलक्षणो वाग्दंडः । धावनवल्गनप्लवनादिरूपः कायदंडः । एभ्यो विरतिर्निवृत्तिः । एवमेष संयमः सप्तदश-भेदो भवति । आर्षे त्वन्येन क्रमेणायमेवार्थो निबद्धः । पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियेषु संयमः । तथा पुस्तकाद्यपरिग्रहः अजीवकायसंयमः । प्रेक्षोपेक्षाप्रमार्जनापरिष्ठापनसंयमः मनोवाक्कायसंयम इति ॥ १७२ ॥

---

अव०—आश्रवाः प्राणातिपातादयः कर्मादानहेतवस्तेभ्यो विरतीकरणं, पञ्चेन्द्रियाणि स्पर्शनादीनि तेषां निरोधः। कषायाः क्रोधादयश्चत्वा-रस्तेषामुदयनिरोधः । दंडा मनोवाक्कायाख्याः, अभिद्रोहाभिमानेर्ष्यादिकरणं मनोदंडः, हिंस्रपरुषानृतादिभाषणं वाग्दंडः, धावनवल्गनप्लवना-दिरूपः कायदंडः । एभ्यो निवृत्तिरेव संयमः । सप्तदश भेदा भवन्ति ॥ १७२ ॥

त्यागमधिकृत्याह—

**बान्धवधनेन्द्रियसुखत्यागात्त्यक्तभयविग्रहः साधुः । त्यक्तात्मा निर्ग्रन्थस्त्यक्ताहंकारममकारः ॥१७३॥**

टीका—बान्धवाः स्वजनकाः, धनं हिरण्यसुवर्णादि, इन्द्रियाणि स्पर्शनादीनि, तद्विषयं सुखं । एषां त्यागादिन्द्रियसंबन्धी सुखत्यागः । प्राप्तेषु विषयेषु स्पर्शादिषु माध्यस्थ्यं । त्यक्तभयविग्रहः साधुः भयमिहपरलोकादानादि सप्तविधं, विग्रहः शरीरं तस्य त्यागो निष्प्रतिकर्मशरीरता, कलहः द्वन्द्वादिर्वा विग्रहः । त्यक्तात्मा असंयमपरिणामलक्षण आत्मा । अष्टविधग्रन्थविजयप्रवृत्तो निर्ग्रन्थः । त्यक्ताहंकारममकार इति अरक्तद्विष्ट इत्यर्थः ॥ १७३ ॥

सत्यमधिकृत्याह—

**अविसंवादनयोगः कायमनोवागजिह्मता चैव । सत्यं चतुर्विधं तच्च जिनवरमतेऽस्ति नान्यत्र ॥१७४॥**

---

अव०—बान्धवाः स्वजनाः, धनं हिरण्यादि, पञ्चेन्द्रियविषयसुखं, एतेषां त्यागात् । भयमिहलोकादि सप्तविधं, विग्रहः शरीरं प्रतिकर्मणा त्यागात्साधुर्मुनिः त्यक्तात्मा परिहृतासंयमपरिणामः अष्टविधग्रन्थविजयप्रवृत्तः परिहृताभिमानममत्वभावोऽरक्तद्विष्टस्त्यागी ॥ १७३ ॥ न विसंवादनं यथादृश्यवस्तुभाषणं तेन योगः संबन्धः, त्रिविधेन योगेन अजिह्मताऽकौटिल्यं, कायेनान्यवेषधारितया विप्रतारयति, मनसाऽसत्यं प्रागालोच्य भाषते करोति वा, वचनेन सद्भूतनिह्नवासद्भूतोद्भावनं कटुकसावद्यादिभाषणं । एतत्परिहाराच्चतुर्विधं सत्यं जिनेन्द्रवचने न त्वन्यत्र ॥ १७४ ॥

टीका—विसंवादनमन्यथास्थितस्यान्यथाभाषणं गामश्वं अश्वं वा गामिति भाषते, पिशुनो वाऽन्यथा चान्यथा च व्युद्ग्राह्य प्रीतिच्छेदनं करोति विसंवादयति । विसंवादनेन योगः संबन्धः न विसंवादनयोगः अविसंवादनयोगः । सत्यं यथादृश्यमानवस्तुभाषणं । कायेनाजिह्मता जिह्मः कुटिलो मलीमसः, कायेनान्यवेषधारितया प्रतारयति न जिह्मोऽजिह्मः द्वितीयः सत्यभेदः । मनसा वाऽजिह्मता सत्यं, मनसा प्रागालोच्य भाषते करोति वा, प्रायो न तादृगालोचयति जिह्मेन येन परः प्रतार्यते, एष तृतीयो भेदः । वागजिह्मता च सत्यं, जिह्मा वाक् सद्भूतनिह्नवः असद्भूतोद्भावनं कटुकपरुषसावद्यादि चेति चतुर्थो भेदः । एतच्च जैनेन्द्र एव मते, नान्यत्र सत्यमिति ॥ १७४ ॥

तपः संप्रत्युच्यते—

**अनशनमूनोदरता वृत्तेः संक्षेपणं रसत्यागः । कायक्लेशः संलीनतेति बाह्यं तपः प्रोक्तम् ॥ १७५ ॥**

टीका—तत्रानशनं चतुर्थभक्तादि षण्मासान्तं, तथाऽपरं भक्तप्रत्याख्यानं, इंगिनीमरणं, पादपोपगमनमिति । ऊनो-

---

अव०—अनशनं चतुर्थभक्तादि षण्मासान्तं तपः । तथा भक्तप्रत्याख्यानेंगितमरणपादपोपगमनादि । ऊनोदरता द्वात्रिंशत्कवलेभ्यो यथाशक्ति यदाहारमूनयति । वृत्तिर्वर्तनं भिक्षा तस्याः संक्षेपणं दत्तिभिर्भिक्षाभिश्च परिमितग्रहणं । रसत्यागः क्षीरदध्यादिविकृतीनां यथाशक्तिपरिहारः । कायक्लेशः कायोत्सर्गोत्कटुकासनातापनादिः । संलीनः सिद्धान्तोपदेशेन इन्द्रियनोइन्द्रियभेदेन तद्भावस्तत्ता । इन्द्रियसंलीनः संहृतेन्द्रियव्यापारः कूर्मवत् । नोइन्द्रियसंलीनो निःकषायमार्तरौद्ररहितं मनो धरन् परोपलक्ष्यं बाह्यं तपः प्रोक्तं जिनादिभिः ॥ १७५ ॥

वृत्तिर्वर्तनं भिक्षा तस्याः संक्षेपणं
दरता द्वात्रिंशतः कवलेभ्यो यथाशक्ति न्यूनयत्याहारं यावदष्टकवलाहार इति। वृत्तिर्वर्तनं भिक्षा तस्याः संक्षेपणं
परिमितग्रहणम् दत्तिभिर्भिक्षाभिश्च । रसत्यागः रसाः क्षीरदधिनवनीतघृतगुडादिप्रभृतयो विकृतयस्तासां त्यागः । काय-
क्लेशः कायोत्सर्गोत्कटुकासनातापनादिः । संलीन आगमोपदेशेन, तद्भावः संलीनता इन्द्रियनोइन्द्रियभेदात् द्विधा ।
इन्द्रियैः संलीनः संहृतेन्द्रियव्यापारः कूर्मवत् यथांगानि स्वात्मन्याहरति कूर्मः, तद्वदिन्द्रियाणि आत्मन्याहृत्य तिष्ठति
साधुः रागद्वेषहेतुभ्यः शब्दादिभ्यो निवर्त्य व्यवस्थापितेन्द्रियः इन्द्रियसंलीनः । नोइन्द्रियं मनः क्रोधादयश्च । आर्तरौ-
द्रध्यानरहिते मनसि नोइन्द्रियसंलीनः । क्रोधादीनामुदयनिरोधः उदयप्राप्तानां च वैफल्यापादनं नोइन्द्रियसंलीनता ।
षोढा विभक्तं बाह्यं तपः परोपलक्ष्यत्वाद्बाह्यमुच्यते ॥ १७५ ॥

आभ्यन्तरतपोनिरूपणायाह—

प्रायश्चित्तध्याने वैयावृत्त्यविनयावथोत्सर्गः । स्वाध्याय इति तपः षट्प्रकारमभ्यन्तरं भवति ॥ १७६ ॥

---

अव०—प्रायश्चित्तमालोचनादिदशविधमतीचारमलप्रक्षालनार्थं । एकाग्रचित्तनिरोधो ध्यानं । तत्रार्तरौद्रे व्युदसनीये, धर्म्यशुक्ले द्वे
ध्यातव्ये । व्यापृतो भावो वैयावृत्तं आचार्यादीनां दशानां भक्तपानवस्त्रादिभिरुपग्रहः शरीरशुश्रूषा चेति । विनीयते येनाष्टविधं कर्म स
विनयो ज्ञानदर्शनचारित्रोपचारभेदात् । व्युत्सर्गोऽतिरिक्तोपकरणभक्तपानादेरुज्झनं । स्वाध्यायो वाचनादिः पञ्चविधः । अभ्यन्तरस्य मिथ्या-
दर्शनकषायादेरपाकरणात्तपोऽपि ॥ १७६ ॥

टीका–प्रायो बाहुल्येन चित्तविशोधनं प्रायश्चित्तमालोचनादि कृतातीचारमलप्रक्षालनार्थं । एकाग्रचित्तनिरोधो ध्यानमामुहूर्तात् । तत्रार्तरौद्रे व्युदसनीये । आर्तं चतुर्विधं अमनोज्ञविषयसंप्रयोगे तद्विप्रयोगार्थं चित्तनिरोधः । शिरोरोगादिवेदनायाश्च विप्रयोगार्थो मनोनिरोधः । मनोज्ञविषयसंप्रयोगे तदविप्रयोगार्थो मनोनिरोधः । चन्दनोशीरादिजनितसुखवेदनायाश्चाविप्रयोगार्थश्चित्तनिरोधः आर्तध्यानं । रौद्रं हिंसानुबन्धि मृषानुबन्धि स्तेयानुबन्धि विषयसंरक्षं चेति । एतयोस्त्यागस्तपः । धर्म्यं शुक्लं च ध्यानमनुष्ठेयं । धर्मादनपेतं धर्म्यं चतुर्विधं–आज्ञाविजयमपायविजयं विपाकविजयं संस्थानविजयं चेति । शुक् शोको दुःखं शारीरं मानसं चेति तल्लुनाति विच्छेदयतीति शुक्लं । पृषोदरादिपाठाच्च संस्कारः । तच्चतुर्विधं–पृथक्त्ववितर्कं सविचारं, एकत्ववितर्कमविचारं, सूक्ष्मक्रियमप्रतिपाति, व्युपरतक्रियमनुवर्तनम् । व्यापृतभावो वैयावृत्त्यं, आचार्योपाध्यायादीनां भक्तपानवस्त्रपात्रादिना दशानामुपग्रहः, शरीरशुश्रूषा चेति । विनीयते येनाष्टविधं कर्म स विनयः ज्ञानदर्शनचारित्रोपचारभेदः । तत्रोपचारविनयो विनयार्हेषु अभ्युत्थानमासनदानांजलिप्रग्रहः दंडकग्रहणचरणप्रक्षालनमर्दनादि । व्युत्सर्गोऽतिरिक्तोपकरणसंसक्तभक्तपानादेरुज्झनं । अभ्यन्तरस्य च मिथ्यादर्शनकषायादेरपाकरणम् । स्वाध्यायः पञ्चधा–वाचना पृच्छना अनुप्रेक्षा आम्नायः धर्मोपदेशश्च । तत्र वाचना आलापकदानं, संजातसन्देहपृच्छनं ( पृच्छना ), अनुप्रेक्षा मनसा परिवर्तनमागमस्य, आम्नाय आत्मानुयोगकथनं, धर्मोपदेश आक्षेपणी विक्षेपणी संवेदनी निर्वेदनी चेति कथा धर्मोपदेशः । एवमभ्यन्तरमपि षोढा तपः ॥ १७६ ॥

संप्रति ब्रह्मचर्यप्रतिपादनायाह—

**दिव्यात्कामरतिसुखात्त्रिविधं त्रिविधेन विरतिरिति नवकं । औदारिकादपि तथा तद्ब्रह्माष्टादशविकल्पम्**

टीका—दिव्यं भवनपतिव्यन्तरज्योतिष्कविमानवासिदेव्यः, ताभ्यो विरतिस्त्रिविधं त्रिविधेनेति । मनसा न करोति न कारयति नानुमन्यते । एवं वाचा कायेन चेति ते नवभेदाः । औदारिकं मानुष्यतिर्यक्स्त्रीषु । तत्र मनोवाक्कायैः कृतकारितानुमतिभिश्च विरतिरिति नवकं । तदेतद्ब्रह्माष्टादशभेदं भवति ॥ १७७ ॥

आकिंचन्यमधिकृत्याह—

**अध्यात्मविदो मूर्छां परिग्रहं वर्णयन्ति निश्चयतः । तस्माद्वैराग्येप्सोराकिंचन्यं परो धर्मः ॥ १७८ ॥**

टीका—अध्यात्मशब्देनात्मन्येव व्यापारः "कथमयमात्मा बध्यते कथं वा मुच्यत इति" तदध्यात्मविदः । ते

---

अव०—दिव्यं भवनेशव्यन्तरज्योतिष्कविमानवासिदेवीनां संबन्धि तस्मात् मनोवाक्कायैः कृतकारितानुमतिभिः विरतिर्नवभेदा, औदारिकं मनुष्यतिर्यक्संबन्धि, तत्रापि मनोवाक्कायैः कृतकारितानुमतिभिश्च विरतिनवकं, तदेवं ब्रह्माष्टादशभेदं भवति ॥ १७७ ॥ आत्मन्येव व्यापारोऽध्यात्मं कथमयमात्मा बध्यते कथं वा मुच्यत इति तद्विदन्तीत्यध्यात्मविदस्ते मूर्छां गार्ध्यं निश्चयनयाभिप्रायेणात्मनः प्रतिविशिष्टपरिणामस्तां परिग्रहशब्दवाच्यतया कथयन्ति । यस्मादेवं तस्माद्वैराग्यमिच्छता आकिंचन्यं परो धर्मः न किंचिन्ममेति विगतमूर्छया स्थेयम् ॥ १७८ ॥

विदितपरंपराः परिग्रहं मूर्छालक्षणं वर्णयन्ति । मूर्छा गार्ध्यं । निश्चयनयाभिप्रायेणात्मनः प्रतिविशिष्टः परिणामः परि-
ग्रहशब्दवाच्यः । यस्मादेवंलक्षणकः परिग्रहस्तस्माद्वैराग्यमिच्छता । आकिंचन्यं परो धर्मः, न क्वचिन्मूर्छा कर्तव्येति
यावत् ॥ १७८ ॥

धर्मानुष्ठाने फलं दर्शयति—

**दशविधधर्मानुष्ठायिनः सदा रागद्वेषमोहानाम् । दृढरूढघनानामपि भवत्युपशमोऽल्पकालेन ॥१७९॥**

टीका—दशप्रकारः क्षमादिधर्मः तदनुष्ठायिनः तदासेविनः । सदैवानवरतं । रागद्वेषमोहानामुपशमो भवति । एते च
संसारभ्रमणस्य मूलं दृढं रूढा घनाश्च सुष्ठु दृढं रूढा जाता घना बहुलाः प्रभूतकर्मांशाः । अथवा यथासंख्यं दृढो रागः,
रूढो द्वेषः, घनो मोहः । एवंविधानामपि स्वल्पेनैव कालेन भवत्युपशमः क्षयो वा ॥ १७९ ॥

**ममकाराहंकारत्यागादतिदुर्जयोद्धतप्रबलान् । हन्ति परीषहगौरवकषायदंडेन्द्रियव्यूहान् ॥ १८० ॥**

टीका—ममकारो माया लोभश्च । अहंकारो मानः क्रोधश्च । तयोर्ममकाराहंकारयोस्त्यागः । किं भवतीत्याह—अति-

---

अव०—दशप्रकारक्षमादिधर्मस्यानुष्ठायिनस्तदासेविनः सदैवानवरतं शिवोपायसेविनः दृढानां वज्रभेदानां रूढानां चिरकालावस्थिति-
प्राप्तस्थैर्याणां घनानां बहलानां एवंविधानामपि ॥ १७९ ॥ माया लोभश्च मानः क्रोधश्च उद्धताः सावष्टंभाः प्रबलाः प्रकृष्टसामर्थ्याः
विनाशयति साधुरिति योगः ॥ १८० ॥

दुर्जयोद्धतबलान् अतीव दुर्जयानुद्धतांश्च सावष्टम्भान् प्रकृष्टबलांश्च । हन्ति विनाशयति । परीषहगौरवकषायदंडेन्द्रियव्यूहान् परीषहाः क्षुत्पिपासादयः, गौरवं गृद्ध्यादिः, कषायाः क्रोधादयः, दंडा मनोवाक्कायाख्याः, इन्द्रियाणि, एषां व्यूहाः समूहाः । चक्रव्यूहगरुडव्यूहादिवत् व्यूहा ग्राह्याः । तान् हन्ति विजयतेऽभिभवतीत्यर्थः ॥ १८० ॥

यथा वैराग्यमार्गे स्थैर्यं भवति तथा च यतत इत्याह–

**प्रवचनभक्तिः श्रुतसंपदुद्यमो व्यतिकरश्च संविग्नैः । वैराग्यमार्गसद्भावभावधीस्थैर्यजनकानि ॥१८१॥**

टीका–प्रोच्यन्ते येन जीवादयस्तत्प्रवचनं, तत्र भक्तिः सेवा तदनुध्यानपरता संघभट्टारको वा प्रवचनं प्रवक्तीति । श्रुतसंपदि उद्यम उत्साहः श्रुतमागमस्तस्य संपत् उपचयः अपूर्वमपूर्वमधीते प्रवचनं । व्यतिकरश्च संविग्नैः संविग्नाः संसारभीरवः तैः सह संपर्को यथोक्तक्रियानुष्ठायिभिर्व्यतिकरः संसर्गः । एभिर्वैराग्यमार्गस्थैर्यं भवति । न केवलं वैराग्यमार्गः ( स्थैर्यं ) सद्भावभावयोर्बुद्धिस्तस्याश्च भवति स्थैर्यं । सद्भावा जीवादयः । एते च यथा भगवद्भिरुक्तास्तथेति स्थिरीभवति बुद्धिः । भावः क्षयोपशमजं दर्शनादि भगवत्सु वा तीर्थकृत्सु साधुषु "एते वन्दनीयाः पूजनीया" इति एवंविधाया धियः स्थैर्यं जनयन्त्येतानीत्यर्थः ॥ १८१ ॥

---

अव०–व्यतिकरः संपर्कः, विरक्तता पूर्वमहर्षिसमाचीर्णक्रियाकलापपरता, सद्भावा जीवादयः, एतानि धर्मस्थैर्यजनकानि ॥ १८१ ॥

एतेष्वेव धीस्थैर्यमिच्छता चतुर्विधा धर्मकथाभ्यसनीयेत्याह–

**आक्षेपणी विक्षेपणी विमार्गबाधनसमर्थविन्यासा । श्रोतृजनश्रोत्रमनःप्रसादजननी यथा जननी ॥१८२॥**

टीका–आक्षिपत्यावर्जयत्यभिमुखीकरोति या सा आक्षेपणी कथा शृंगारादिप्राया । विक्षिपति भोगाभिलाषाद्या कामभोगेषु वैमुख्यमापादयति सा विक्षेपणी । विमार्गः सम्यग्दर्शनादित्रयविपरीतः सुगतादिप्रदर्शितस्तस्य बाधनं दोषवत्त्वख्यापनं । विमार्गबाधने समर्थः शक्तो विन्यासो रचना यस्याः सा विमार्गबाधनसमर्थविन्यासा । शृणोतीति श्रोता जनो लोकः श्रोतृजनस्तस्य श्रोत्रं मनश्च तयोः प्रसादो हर्षो जन्यते यया सा श्रोतृजनश्रोत्रमनःप्रसादजननी । यथा जननी माता हितकारिणी सदुपदेशदायिनी स्वापत्यानां श्रोत्रमनसी प्रसादयति परितोषयति तथैषापीति संबन्धः॥१८२॥

चतुर्विधा कथा प्रस्तुतेति तच्छेषमाह—

**संवेदनीं च निर्वेदनीं च धर्म्यां कथां सदा कुर्यात् । स्त्रीभक्तचौरजनपदकथाश्च दूरात्परित्याज्याः१८३**

---

अव०–आक्षिप्यन्ते धर्मं प्रत्यभिमुखाः प्राणिनो यया सा आक्षेपणी । विक्षिप्यन्ते परापरदेवादिदोषकथनेन प्रेर्यन्ते प्राणिनो यत्र सा विक्षेपणी । विमार्गो जैनमार्गादन्ये एकान्तमतावलंबिनस्तेषां बाधने समर्था पदरचना यस्याः सा । श्रोता चासौ जनश्च तस्य श्रोत्रमनसोस्तयोः प्रसादजननी यथा जननी माता ॥ १८२ ॥ सम्यग्विवेच्यते नरकादिदुःखेभ्यो भयं ग्राह्यते यया सा संवेजनी । निर्वेदं कामभोगेभ्यो यया सा एवमेताम् ॥ १८३ ॥

टीका—सम्यग्वेद्यते ग्राह्यते श्रोता यया सा संवेदनी कथा। नरकगतानुष्णा वेदनाः शीताश्च, न चास्त्यक्षिनिमेषमात्रमपि तस्या वेदनाया विच्छेदः। तत्र च तादृशी वेदनामनुभवतां जघन्येन दशवर्षसहस्राण्यायुरुत्कर्षेण त्रयस्त्रिंशत्सागरोपमाणीति। तिर्यग्योनावपि शीतोष्णक्षुत्तृष्णातिगुरुभारसंतापजं दुःखं वाहनताडनदमनच्छेदनादि चेति। मानुषेष्वपि काणखञ्जवामनजडबधिरान्धकुब्जविकृताकृतित्वानि ज्वरकुष्ठशोषकासातिसारहृद्रोगवेदनाश्च। तथा प्रियविप्रयोगाप्रियसंप्रयोगेप्सितालाभदारिद्र्यदौर्भाग्यदौर्मनस्यवधबन्धनाभियोगादिदुःखानुभवः। देवेषु चोत्कर्षविशेषदर्शनादात्मनश्च तद्धानेर्दुःखानुभवः। तथा बलवता देवेनाभियोगादन्येऽल्पपुण्याः करितुरगाश्वमयूरादिरूपाणि कारिताः सन्तो वाह्यन्ते प्रतिसेव्यन्ते च। तथा च्यवनकाले आयुषि षण्मासावशेषे उपपत्तिस्थानानि बीभत्सानि विकृताकृतीन्यवधिनालोक्य महदशर्म भजन्ते। अतश्चतुर्विधादपि संसारादुद्विजते मोक्षार्थमेव च घटत इति निर्वेदं नीयते यया कामभोगेषु सा निर्वेदनी। इत्वराः कामभोगा न तृप्तिमाधातुमात्मनः प्रत्यलाः। सदा क्लिन्नश्च स्त्रीव्रणो दुर्गन्धिरशुचिरत्यन्तजुगुप्सितस्तत्र चारतिरित्येवं पामन इव कंडूपरिगतकंडूयं मोहोदयात्सुखमिति मन्यते, अतो निर्विण्णः परित्यज्य कामभोगान् निःसंगः सिद्धिवध्वाराधने प्रवर्तत इति। एवमेतां संवेदनीं निर्वेदनीं च धर्म्यां कथां सदा कुर्यात्, धर्मादनपेतामित्यर्थः। स्त्र्यादिकथाश्च दूरात् परित्याज्याः। तत्र स्त्रीकथा रूपयौवनलावण्यवेषभाषाचंक्रमणानि योषितां वर्णयति यया सा स्त्रीकथा। भक्तमाहारस्तत्कथा, ओदनव्यञ्जनखंडखाद्यादिपरिनिष्ठान्ता भक्तकथा। चौरा मलिम्लुचा अमुना प्रकारेण खात्राणि खनन्ति, इष्टकाश्च गालयन्ति, ग्रन्थींश्छिन्दन्ति, तालकान्युद्घाटयन्ति, परं न छलयन्तीति चौर-

कथा । जनपदकथा "सेतुजानि ऋतुजानि वा सस्यान्यस्मिन् जनपदे जायन्ते, अस्मिन्नतिप्रभूतो गवां रसः, शालिमुद्गगोधूमादि वोत्पद्यतेऽत्र नान्यत्रेति" जनपदकथा । एवमेता मनसापि नालोच्याः किमुत वाचा इति दूरात्परिहार्याः ॥ १७३ ॥

अपि च

**यावत्परगुणदोषपरिकीर्तने व्यापृतं मनो भवति । तावद्वरं विशुद्धे ध्याने व्यग्रं मनः कर्तुम् ॥१७४॥**

टीका–यावदिति कालपरिमाणम् । यावन्तं कालं परस्य गुणान् दोषांश्च परिकीर्तयत्युद्घाटयति तत्प्रवणव्यापारो भवति । परदोषोद्घट्टने व्यापारयति व्यग्रं मनः करोति, पैशुन्यात् कर्मबन्धकारि । तावदिति तावन्तं कालं वरं शोभनतरं निर्जरालाभात् । विशुद्धे ध्याने निर्मले शुक्ले । व्यापृतमक्षणिकं मनः कृतमिति । ननु च परगुणोत्कीर्तनं न निन्द्यं ? उच्यते–अध्यात्मचिन्तापन्नस्य न तेनापि किंचित्प्रयोजनम् ॥ १७४ ॥

विशुद्धध्यानप्रदर्शनायाह–

**शास्त्राध्ययने चाध्यापने च संचिन्तने तथात्मनि च । धर्मकथने च सततं यत्नः सर्वात्मना कार्यः॥१७५॥**

---

अव०–यावत्कालं, अध्यात्मचिन्तापन्नस्य, न तेनापि परदोषगुणकीर्तनव्यापारेण किंचित्प्रयोजनं, तावत्कालं व्यग्रं व्यापृतम् ॥१८४॥ आचारादिश्रुतपाठेऽपरेषां पाठने चाद्य मया किं कृतमित्यादि स्वात्मनि संचिन्तने ॥ १८५ ॥

टीका–शिष्यन्तेऽनेनोन्मार्गप्रस्थिता इति शास्त्रम् । शास्तीति शास्त्रम्, कर्तृव्यापारविवक्षायाम् । तस्याध्ययनमपूर्वग्रहणं पूर्वगृहीतानुचिन्तनं वाचनादानमित्यादि । अध्यापनग्रहणात् संचिन्तने संचिन्त्य पश्चाद्दोषादिविशुद्धमध्यापयति । पर्यालोच्यते चात्मनि "किमद्य मया कृतं शास्त्रोक्तं किं वा नो कृतमिति" । दशविधधर्माख्याने च सततं यत्नः सर्वात्मना मनोवाक्कायैः कार्यः ॥ १८५ ॥

शास्त्रशब्दव्युत्पत्त्यर्थमाह–

**शास्विति वाग्विधिविद्भिर्धातुः पापठ्यतेऽनुशिष्ट्यर्थः । त्रैङिति च पालनार्थे विनिश्चितः सर्वशब्दविदाम् १८६**

टीका–शासु अनुशिष्टाविति । वाग्विधिविदश्चतुर्दशपूर्वधराः । पापठ्यत इति अनुशासनेऽस्यार्थे पठ्यत इत्यर्थः । अनेकार्था धातव इत्यन्यस्मिन्नप्यर्थे वृत्तिरस्तीति तद्दर्शयति–अनुशिष्ट्यर्थ इति । त्रैङ् पालने । विनिश्चितो विशेषेण नियतः । सर्वशब्दविदां प्राकृतसंस्कृतशब्दशास्त्रज्ञानां विनिश्चित इत्यर्थः ॥ १८६ ॥

**यस्माद्रागद्वेषोद्धतचित्तान् समनुशास्ति सद्धर्मे । संत्रायते च दुःखाच्छास्त्रमिति निरुच्यते सद्भिः ॥१८७॥**

---

अव०–शासृङ् अनुशिष्टौ इति वाग्विधिविद्भिश्चतुर्दशपूर्वधरैः । विशेषेणनियतो निर्णीतः । देङ् त्रैङ् पालनार्थे । सर्वशब्दविदां संस्कृतप्राकृतादिशब्दविज्ञानाम् ॥ १८६ ॥ रागद्वेषव्याप्तचित्तान् शिक्षयति विपरीतमशुभं मा कुरु अनवरतं शुभमविपरीतं कुरु इत्यादिना । तथा संत्रायते रक्षति सदाचारे । स्थितानिति शेषः । कुतो नरकादिदुःखात् ॥ १८७ ॥

टीका—शास्त्रनिर्वचनद्वारेण शब्दं संस्कारयति । रागद्वेषाभ्यां उद्धतमुल्बणं चित्तं येषां तत्र रागद्वेषोद्धतचित्तान् सम्यगनुशास्ति । सद्धर्मे क्षमादिदशलक्षणे सद्धर्मविषयमनुशासनं करोति । संत्रायते च दुःखात् शारीरान्मानसाच्चेति परिरक्षति यस्मात्तस्माच्छास्त्रमभिधीयते । सद्भिर्यथान्यायवादिभिर्निश्चयेनोच्यते निरुच्यत इत्यर्थः ॥ १८७ ॥

**शासनसामर्थ्येन तु संत्राणबलेन चानवद्येन । युक्तं यत्तच्छास्त्रं तच्चैतत्सर्वविद्वचनम् ॥ १८८ ॥**

टीका—शासनसामर्थ्येनानुशासनसमर्थमिदं द्वादशांगं प्रवचनमतस्तेन शासनसामर्थ्येन संसारस्वभावमनुवदता तद्विपरीतं च मोक्षमार्गं दर्शयता निराबाधं परिरक्षता च शरणागतान् प्राणिनोऽनवद्येनोपायेन कश्चित् परिरक्षत्यन्यानुपघ्नन्न तथेदं शासनं कस्यचिदुपघातकं युक्तमिदं प्रतिबद्धम् । यतः शास्त्रमुक्तेनार्थद्वयेन तच्चैतच्छास्त्रं सर्वविदः सर्वज्ञस्य वचनमन्वर्थद्वारेण क्षीणाशेषरागद्वेषमोहस्य नान्यस्येति ॥ १८८ ॥

तदेव सर्वज्ञवचनमुद्देशतो दर्शयन्नाह—

**जीवाजीवाः पुण्यं पापाश्रवसंवराः सनिर्जरणाः । बन्धो मोक्षश्चैते सम्यक् चिन्त्या नव पदार्थाः ॥१८९॥**

टीका—जीवा इति संभवन्तः प्राणभाज उक्ताः । ते च द्रव्यभावभेदेन प्राणा द्विप्रकाराः । तत्र द्रव्यप्राणाः "पञ्चे-

---

अव०—शासनस्य शिक्षणस्य सामर्थ्यं बलिष्ठतानेन संत्राणस्य पालनस्य बलेन च उभयेन सहितं यत्तच्छास्त्रमुच्यते सिद्धान्तः संसारभावमनुवदतां मोक्षं दर्शयतां सर्वविदामेतद्वचनम् ॥ १८८ ॥ बन्धः कर्मोपादानं, मोक्षः कर्माभावः ॥ १८९ ॥

न्द्रियाणि त्रिविधं बलं च उच्छ्वासनिःश्वासबलं तथायुरिति "। भावप्राणास्तु ज्ञानदर्शनोपयोगाख्याः । एभिः प्राणैरजीवि-
षुर्जीवन्ति जीविष्यन्ति चेति जीवाः । तद्विपरीतास्त्वजीवाः। पुण्यं सातादिद्वाचत्वारिंशत्कर्मप्रकृतयः । पापं द्व्यधिकाशीति
कर्मभेदानाम् । आश्रवः कायवाग्मनोभिः कर्मयोग आत्मनः । एषामेवाश्रवाणां निरोधः संवरः । सह निर्जरणेन सनिर्ज-
रणाः । निरुद्धेष्वाश्रवद्वारेषु गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचरणयुक्तस्य तपोऽनुष्ठानात् कर्मनिर्जरणं भवतीति । मिथ्या-
दर्शनादयो बन्धहेतवः । तद्योगात् सकषायः सन्नात्मा कर्मणो योग्यान् दलानादत्ते स बन्धः । बन्धहेत्वभावनिर्जराभ्यां
कृत्स्नकर्मक्षयो मोक्षः । इत्थमेते सम्यक् चिन्त्याः सम्यगालोच्या अन्यस्मै प्रतिपाद्या नव पदार्थाः । ननु च शास्त्रे सप्ता-
भिहिताः कथमत्र नवेति? उच्यते–शास्त्रे पुण्यपापयोर्बन्धग्रहणेनैव ग्रहणात् सप्त संख्या । इह तु भेदेनोपादानं पुण्यपा-
पप्रकृतिविभागप्रतिपादनार्थमिति ॥ १८९ ॥

जीवभेदप्रतिपादनायाह–

**जीवा मुक्ताः संसारिणश्च संसारिणस्त्वनेकविधाः । लक्षणतो विज्ञेया द्वित्रिचतुःपञ्चषड्भेदाः ॥१९०॥**

---

अव०–एतानि विवरीषुस्तावज्जीवानाह–असंख्येयप्रदेशात्मकाः सकलोपयोगभाजः मुक्ताः सिद्धाः । संसारिणो भवस्थाः लक्षणतश्चि-
ह्नत एकेन्द्रियादयो ज्ञातव्या इति लक्षणतोऽसाधारणस्वरूपतः ॥ १९० ॥

टीका—द्विप्रकारा जीवाः । मुक्ताः सकलकर्मक्षयभाज एकरूपाः । संसारिणस्त्वनेकविधाश्चतुर्गतिप्रवृत्ता ये ते चानेकभेदाः नारकास्तिर्यञ्चो मनुष्या देवाः । पुना रत्नप्रभापृथिवीनारका इत्यादिभेदाः । तिर्यञ्चोऽप्येकद्वित्रिचतुःपञ्चेन्द्रियभेदाः । पुनरेकेन्द्रियाः पृथिव्यादिभेदाः । द्वीन्द्रियाः शंखशुक्तिकादयः । त्रीन्द्रियाः पिपीलिकादयः । चतुरिन्द्रिया मक्षिकाभ्रमरपतङ्गादयः । पञ्चेन्द्रिया गोमहिष्यजाविकादयः गर्भव्युत्क्रान्तादयः संमूर्छजाश्च । मनुष्या आर्यम्लेच्छादिभेदाः गर्भजाः संमूर्छजाश्चेति । देवा भवनपतिव्यन्तरज्योतिष्कवैमानिकाः । भवनपतयो दशासुरादयः । व्यन्तराः किन्नरादयोऽष्टभेदाः । ज्योतिष्काः पञ्चप्रकाराः सूर्यादयः । वैमानिकाः सौधर्मवास्यादय इति ॥ १९० ॥

प्रकरणकारस्त्वनेकविधत्वमन्यथा दर्शयति—

**द्विविधाश्चराचराख्यास्त्रिविधाः स्त्रीपुंनपुंसका ज्ञेयाः । नारकतिर्यग्मानुषदेवाश्चतुर्विधाः प्रोक्ताः ॥१९१॥**

टीका—चरा जंगमास्तेजोवायुद्वीन्द्रियादयः । अचराः स्थावराः पृथिव्यादयः । त्रिविधाः स्त्रियः पुमांसो नपुंसकाः । नारकादिभेदेन चतुर्विधाः । शासनेऽभिहिताः ॥ १९१ ॥

**पञ्चविधास्त्वेकद्वित्रिचतुःपञ्चेन्द्रियाश्च निर्दिष्टाः । क्षित्यंबुवह्निपवनतरवस्त्रसाश्च षड्भेदाः ॥१९२॥**

टीका—पञ्चप्रकारा एकद्वित्रिचतुःपञ्चेन्द्रियाः कथिताः । भूमिजलवह्निवायुवनस्पतिद्वीन्द्रियादयश्चेति षड्भेदाः ॥ १९२ ॥

**एवमनेकविधानामेकैको विधिरनन्तपर्यायः । प्रोक्तःस्थित्यवगाहज्ञानदर्शनादिपर्यायैः ॥ १९३ ॥**

टीका–एवमुक्तेन न्यायेनानेकविधानामनेकभेदानामेकैको विधिर्मूलभेदोऽनन्तपर्यायोऽनन्तभेदः कथितः । केन कारणेन स्थितितोऽवगाहतो ज्ञानतो दर्शनतश्च । स्थितितस्तावदनन्तपर्यायः । अनादौ संसारेऽनन्ताः स्थितिपर्यायाः । अवगाहतोऽप्यसंख्येयप्रदेशावगाहे हीनाधिकसमप्रदेशभेदेनावगाहोऽपि बहुप्रकारः । तथा ज्ञानतोऽप्यनन्तपर्यायता दर्शनतश्च । यथोक्तम्–"अणंता णाणपज्जवा, अणंता दंसणपज्जवा" । एकैको नारकादिभेदो यथासंभवमनन्तपर्यायो भवति ॥१९३॥

जीवलक्षणाभिधित्सयाह–

**सामान्यं खलु लक्षणमुपयोगो भवति सर्वजीवानाम् । साकारोऽनाकारश्च सोऽष्टभेदश्चतुर्धा तु ॥१९४॥**

टीका–सामान्यं लक्षणं सर्वजीवानामुपयोगश्चेतना ज्ञानदर्शनव्यापारः । खलुशब्दोऽवधारणे । उपयोग एव सामान्यलक्षणम् । सर्वजीवानामिति । तमुपयोगं विस्पष्टयति–साकारोपयोगः । आकारो विकल्पः । सहाकारेण साकारः । सवि-

---

अव०–एवमनेकप्रकाराणामेकैको विधिरेकैको भेदोऽनन्तकालवर्तित्वादनन्तपर्यायः, अनन्ताः पर्याया धर्मा यस्य, अन्तर्मुहूर्तादारभ्यैकैकसमयवृद्ध्या त्रयस्त्रिंशत्सागरोपमाणि यावत् स्थितयः, अंगुलासंख्येयभागादारभ्य यावत्समस्तलोकावगाहः, ज्ञानं वस्तुविशेषावबोधो दर्शनं वस्तुसामान्यावबोधः, पर्यायास्तारतम्यकृतविशेषाः ॥ १९३ ॥ उपयोगश्चेतनाज्ञानदर्शनव्यापारः, साकारो विकल्परूपो ज्ञानोपयोगः, तद्विपरीतो दर्शनोपयोगः द्व्यष्टचतुर्भेदः ॥ १९४ ॥

कल्पो ज्ञानव्यापारः । अनाकारो दर्शनोपयोगः सामान्यग्रहणं निर्विकल्पमित्यर्थः । ज्ञानोपयोगोऽष्टभेदः मतिश्रुतावधिमनःपर्यायकेवलमत्यज्ञानश्रुताज्ञानविभंगज्ञानाख्यः । दर्शनोपयोगश्चतुर्धा चक्षुरचक्षुरवधिकेवलदर्शनाख्यः ॥ १९४ ॥

तानष्टौ भेदांश्चतुरश्च विस्तरतः कथयति–

**ज्ञानाज्ञाने पञ्चत्रिविकल्पे सोऽष्टधा तु साकारः। चक्षुरचक्षुरवधिकेवलदृग्विषयस्त्वनाकारः ॥ १९५ ॥**

टीका–यथासंख्यं पञ्चविकल्पं मत्यादिज्ञानं, त्रिविकल्पमज्ञानं मत्यज्ञानादि । एषोऽष्टप्रकार उपयोगः साकारः । तुशब्दोऽवधारणे । अष्टविध एवेति । चक्षुर्दर्शनादिसामान्योपयोगश्चतुर्धैवेति ॥ १९५ ॥

जीवस्यैवमुपयोगलक्षणस्य सतः परिणतिविशेषान् भावान् दर्शयन्नाह–

**भावा भवन्ति जीवस्यौदयिकः पारिणामिकश्चैव। औपशमिकः क्षयोत्थः क्षयोपशमजश्च पञ्चैते ॥१९६॥**

टीका–पञ्चैते जीवस्य भावाः परिणतिविशेषाः कर्मोदयोपशमक्षयोपशमक्षयनिर्वृत्ताः । औदयिकः पारिणामिकः औपशमिकः क्षायिकः क्षायोपशमिकश्च पञ्चेति ॥ १९६ ॥

---

अव०–ज्ञानं मत्यादि मतिश्रुतावधयो मिथ्यात्वोदयोपरक्तस्वभावा अज्ञानतां यान्ति ॥ १९५ ॥ औदयिकः, स च जीवोपात्तकर्मणामुदयो देवनारकादिपर्यायकारी, पारिणामिको जीवभव्याभव्यत्वादिरूपस्त्रिकालतदविच्युतिरूपः, उपशमः कर्मणां विपाकप्रदेशद्वयरूपोदयाभावस्तेन निर्वृत्त औपशमिकः सम्यक्त्वचारित्ररूपः, सम्यक्त्वज्ञानचारित्रादिरूपः क्षयोत्थः ॥ १९६ ॥

एवमौदयिकौपशमिकादिभेदानां क्रमेण भेदानाह—

ते चैकविंशतिर्द्विनवाष्टादशत्रिभेदाश्च विज्ञेयाः । षष्ठश्च सान्निपातिक इत्यन्यः पञ्चदशभेदः ॥१२७॥

टीका—कर्मोदये भवः कर्मोदयनिर्वृत्तो वा औदयिकः स एकविंशतिभेदः । गतिर्नारकादिका चतुर्विधा, कषायाः क्रोधादयश्चतुर्धा, लिंगं स्त्रीपुंनपुंसकाख्यं त्रिधा, मिथ्यादर्शनमश्रद्धानलक्षणमेकप्रकारं, अज्ञानमेकविधं, असंयतत्वमेकप्रकारं, असिद्धत्वमेकविधं, लेश्याः षट्प्रकाराः । एते गत्यादयः सर्वे कर्मोदयाद्भवन्ति । अनादिपारिणामिको भावस्त्रिविधः । जीवत्वं भव्यत्वमभव्यत्वं चेति । नैते कर्मोदयाद्यपेक्षन्ते । कर्मोपशमनिर्वृत्त औपशमिकः सम्यक्त्वं चारित्रं च द्विविधः । क्षयोत्थः कर्मक्षयाज्जातः क्षायिकः, स नवभेदः, केवलज्ञानं, केवलदर्शनं दानलब्धिः लाभलब्धिः भोगलब्धिः उपभोगलब्धिः वीर्यलब्धिः सम्यक्त्वं चारित्रं चेति । क्षयोपशमजः क्षायोपशमिकः, सोऽष्टादशभेदः, मत्यादिज्ञानं चतुर्विधं, अज्ञानं मत्यज्ञानादि त्रिविधं, दर्शनं चक्षुर्दर्शनादि त्रिविधं, दानादिलब्धयः पञ्च, सम्यक्त्वं, चारित्रं, संयमासंयमश्चेति । ष-

अन्व०—गतिर्नरकादिः ४। कषायाः क्रोधादयः ४। लिंगं स्त्रीपुंनपुंसकं ३। मिथ्यात्वं । अज्ञानं, असंयतत्वं, असिद्धत्वं, लेश्याः ६, एते कर्मोदयाद्भवन्ति । पारिणामिकौपशमिकौ पूर्वोक्तत्रिविधद्विविधौ भवतः, क्रमेण कर्मोदयनिरपेक्षसापेक्षौ च। कर्मक्षयाज्जातः क्षायिकः स नवविधः सम्यक्त्वचारित्रकेवलज्ञानकेवलदर्शनदानादिपञ्चलब्धिभेदतः । क्षायोपशमिकोऽष्टादशविधः, मत्यादिज्ञानचतुष्कमज्ञानत्रिकं चक्षुरादिदर्शनत्रिकं दानादिपञ्चलब्धयः सम्यक्त्वं चारित्रं देशविरतिश्चेति । षष्ठश्च सान्निपातिकः पूर्वोक्तभावानां द्विकादिसंयोगजः स च पञ्चदशभेदो भावः अन्य एकादशभेदरूपस्त्याज्यो विरोधित्वात् ॥ १२७ ॥

ष्ठश्च सान्निपातिक इति सन्निपातः संयोगः । सन्निपातः प्रयोजनमस्येति सान्निपातिकः संयोगजो ज्ञावः । तत्र पञ्चानां ज्ञावानामौदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकानां द्विकादिसंयोगेन षड्विंशतिर्विकल्पा ज्ञवन्ति । तत्र विरोधित्वादेकादश त्याज्याः, शेषाः पञ्चदशाविरोधिनः संज्ञवन्ति । तेषामविरोधानां पञ्चदशानां ग्रहणं कृतं प्रकरणकारेणेति । ते चामी विज्ञेयाः । अन्यः षड्विकल्पः सान्निपातिक इत्यर्थः ॥ १९७ ॥

**एज्ञिर्ज्ञावैः स्थानं गतिमिन्द्रियसंपदः सुखं दुःखम् । संप्राप्नोतीत्यात्मा सोऽष्टविकल्पः समासेन ॥१९८॥**

टीका—एज्ञिरौदयिकादिज्ञिर्ज्ञावैः स्थानं प्राप्नोतीत्यात्मा स्थानमिति स्थीयते यत्र संसारे तत्स्थानं सामान्येनाविशेषितं प्राप्नोति । यत उक्तम्—"सव्वठाणाइं असासयाइं इह चेव देवलोएअ । असुरसुरनारयाणं (नराइणं) सिद्धिविसेसा सुहाइं च ॥१॥" गतिं नरकादीनां च गतिं प्राप्नोति ज्ञावैरेव । ननु च गतिस्थानयोर्नास्ति विशेषः ? उच्यते—नरकगतावेव जघन्यमध्यमोत्कृष्टानि स्थानानि बहूनि सन्तीति तत्प्रतिपादनार्थं स्थानग्रहणं पृथगिति । इन्द्रियाणि स्पर्शनादीनि । एषां संपत्समग्रताऽविकलता वाऽतश्चेन्द्रियसंपदः प्राप्नोतीत्यात्मा । अथवा इन्द्रियाणि च संपदश्च विज्ञूतय इत्यर्थः । तथा सुखं दुःखं औदयिकज्ञाववशादवाप्नोति । अतति गच्छति तांस्तान् स्थानादिविशेषान् प्रकर्षेणाप्नोतीत्यात्मा । स चाष्टज्ञेदः संक्षेपतोऽनुगन्तव्यः ॥१९८॥

---

अव०—एभिरौदयिकादिभिर्भावैः, आत्मा जीवः, स्थानं, गतिः, इन्द्रियाणि, संपदः, सुखं, दुःखं, एतानि संप्राप्नोति । स्थीयते यत्र संसारे जघन्यादिस्थितिः स्थानमात्मनः स चात्मा समासेनाष्टविकल्पः तानाह ॥ १९८ ॥

तानष्टौ विकल्पानभिधातुकाम आह–

द्रव्यं कषाययोगावुपयोगो ज्ञानदर्शने चेति । चारित्रं वीर्यं चेत्यष्टविधा मार्गणा तस्य ॥ १९९ ॥

टीका–द्रव्यात्मा कषायात्मा योगात्मा उपयोगात्मा ज्ञानात्मा दर्शनात्मा चारित्रात्मा वीर्यात्मा चेति अष्टविधाऽष्टप्रकारा मार्गणा गवेषणा परीक्षा तस्यात्मनः कार्येति ॥ १९९ ॥

संप्रत्येषां द्रव्याद्यात्मनां स्वरूपविवक्षयाह–

जीवाजीवानां द्रव्यात्मा सकषायिणां कषायात्मा । योगः सयोगिनां पुनरुपयोगः सर्वजीवानाम् ॥२००॥

टीका–जीवत्वमनादिपरिणामिको भावः । जीवश्च द्रव्यमन्वयी सर्वत्र परिणामपर्यायेऽनुस्यूतं भवति तांस्तान् पर्याया-

---

अव०–द्रव्यात्मा, कषायात्मा, योगात्मा, उपयोगात्मा, ज्ञानात्मा, दर्शनात्मा, चारित्रात्मा, वीर्यात्मा, मार्गणा परीक्षा चेति ॥१९९॥ सांप्रतमेषां स्वरूपं प्रतिपादयति–जीवानामेकाक्षादीनां सर्वत्र जीवत्वान्वयात्, अजीवानां धर्मास्तिकायादीनामजीवत्वान्वयंशात् द्रव्यात्मा स्यादिति १। कषायाः सन्ति येषां ते कषायिणः समोहास्तेषां सकषायिणां कषायैः सहैकत्वापत्तेः कषायात्मा २। योगा मनोवाक्कायव्यापारास्तदेकत्वपरिणत आत्मा स योगात्मा सयोगानां स्यात् ३। उपयोगो ज्ञानदर्शनव्यापारो ज्ञेयविषयस्तत्परिणत उपयोगात्मा सर्वजीवानां न त्वजीवानाम् ४ ॥ २०० ॥

नाप्नोति नारकादीन्। सर्वत्राविछेदेन वर्तते। एकं द्रव्यं द्रव्यात्मा सर्वत्रान्वेति यस्मादिति। एवमजीवानामपि योऽन्वय्यंशः पुद्गलानां स द्रव्यात्मा। धर्मादीनां तु परप्रत्यया उत्पादादिपरिणामास्तत्राप्यन्वयी द्रव्यात्मेति। कषायाः क्रोधादयस्ते सन्ति येषां ते कषायिणस्तेषां कषायिणामात्मा कषायैः सहैकत्वापत्तेः कषायात्मेत्युच्यते। योगा मनोवाक्कायलक्षणास्तदेकत्वपरिणत आत्मा यः स खलु योगात्मा सयोगानामिति। उपयोगो ज्ञानदर्शनव्यापारो ज्ञेयविशेषस्तत्परिणत आत्मा उपयोगात्मेति सर्वजीवविषयः। सर्वग्रहणमुक्तपरिग्रहार्थम् ॥ २०० ॥

**ज्ञानं सम्यग्दृष्टेर्दर्शनमथ भवति सर्वजीवानाम्। चारित्रं विरतानां तु सर्वसंसारिणां वीर्यम् ॥२०१॥**

टीका–सम्यग्दर्शनसंपन्नस्यात्मनस्तत्त्वार्थश्रद्धानपरिणामभाजो यो ज्ञानपरिणामः स ज्ञानात्मा। दर्शनात्मा चक्षुर्दर्शनादिपरिणतस्यात्मनस्तदेकतापत्तेर्दर्शनात्मा। सर्वजीवविषयप्राणातिपातादिपापस्थानेभ्यो विरतस्य तदाकारपरिणतस्य चारित्रात्मा। वीर्यं शक्तिश्चेष्टा तेन वीर्येण सर्वे संसारिणो वीर्यात्मान उच्यन्ते ॥ २०१ ॥

---

अव०–सम्यग्दर्शनसंपन्नस्य तत्त्वार्थश्रद्धानभाजो यो ज्ञानपरिणामः स ज्ञानात्मा ५। चक्षुरादिदर्शनपरिणतानां दर्शनात्मा सर्वजीवानां भवति ६। प्राणातिपातादिपापस्थानेभ्यो विरतानां तदाकारपरिणतानां चारित्रात्मा ७। वीर्यं शक्तिः प्रवर्तनं तद्भाजां सर्वेषां संसारिणां वीर्यात्मा ८ ॥ २०१ ॥

एवमेतेऽष्टौ आत्मनो विकल्पाः प्रतिपादितास्तत्र द्रव्यात्मानमाशंकते—अजीवविषयमात्मेति ज्ञानदर्शनोपयोगस्वभावश्चेतनः प्रतीतः, कथं पुद्गलादिष्वात्मशब्दप्रवृत्तिरित्युच्यते—

**द्रव्यात्मेत्युपचारः सर्वद्रव्येषु नयविशेषेण । आत्मादेशादात्मा भवत्यनात्मा परादेशात् ॥ २०२ ॥**

टीका—उपचारो व्यवहारः शब्दनिबन्धनः । स च शब्दो निमित्तमाश्रित्य प्रतीतः । तच्च निमित्तमुभयत्र तुल्यम् । स यथैव चेतनो भवति तथाऽचेतनोऽपि अन्वयी पुद्गलांशोऽततीति भवत्यात्मशब्दवाच्यः । सर्वद्रव्यविषयश्चैष न्याय इति नयविशेषेणेत्याह—सामान्यग्राहिणा नयभेदेन सर्वत्रात्मशब्दप्रवृत्तिः । अथ सोऽप्यात्मा द्रव्यक्षेत्रादिविवक्षयास्ति न सर्वथा । तत्र स्वरूपेणादिष्टो विवक्षित आत्मास्ति, पररूपेणादिष्टो नास्ति । यथैव स्वास्तित्वादस्तीत्युच्यते, तथा परनास्तित्वान्नास्तीत्युच्यते । स्वावगाढक्षेत्रादिष्टस्तेनैव पर्यायेणास्ति, नान्येन । एवं कालात्मा वर्तमानतयादिष्टोऽस्ति, अतीतानागततया नास्ति । औदयिकादीनामन्यतमेन भावेनादिष्टोऽस्ति, शेषभावेन नास्ति ॥ २०२ ॥

---

अव०—एतेऽष्टौ विकल्पाः प्रतिपादितास्तत्र द्रव्यात्मानमाशंकते—आत्मेति ज्ञानदर्शनस्वभावश्चेतनः प्रतीतः, सोऽजीवविषयपुद्गलादिषु कथमात्मशब्दप्रवृत्तिरित्यत्रोच्यते—उपचारो व्यवहारः स चाततीत्यात्मा भवति, व्युत्पत्तितः शब्दवाच्यः, सर्वद्रव्यविषयश्चैष न्याय इति नयविशेषेण सामान्यग्राहिणा नयेन, स्वरूपात् पररूपात् ॥ २०२ ॥

**एवं संयोगाल्पबहुत्वाद्यैर्नैकशः स परिमृग्यः । जीवस्यैतत्सर्वं स्वतत्त्वमिह लक्षणैर्दृष्टम् ॥ २०३ ॥**

टीका–संयोगस्तावद्येन येन संयुक्तस्तेन तेन रूपेणात्मास्ति, येनासंयुक्तस्तेन नास्ति । नारका नरकगतिसंयोगेनैव विद्यन्ते, न देवगतिसंयोगेनेति । अल्पत्वेन बहुत्वेन चादिष्टः स्यादस्ति स्यान्नास्ति । अल्पत्वे मनुष्या, देवा असंख्येयाः । तत्रासंख्येयत्वेनैव तिर्यञ्चोऽनन्तसंख्याः तेन तिर्यक्संख्यात्मना मनुष्यो नास्तीति मनुष्येभ्यस्तिर्यञ्चोऽनन्ताः । तेन कारणेन संख्यात्मना नास्ति मनुष्य इत्याद्यनाल्पबहुत्वादिचिन्ता कार्या । आदिग्रहणान्नामाद्यनुयोगद्वारभेदेनास्तित्वनास्तित्वे भावयितव्ये । अनेकश इत्यनेकेन भेदेन निर्देशस्वामित्वादिनापि आत्मा परिमृग्यः परीक्षणीयः । एवं च जीवस्य स्वतत्त्वं सर्वमेव लक्षणैर्दृष्टं । लक्ष्यते येन येनात्मा देशादिना तल्लक्षणं बहुप्रकारं । तैर्लक्षणैर्दृष्टमुपलब्धमनेकभेदमित्यर्थः ॥ २०३ ॥

**उत्पादविगमनित्यत्वलक्षणं यत्तदस्ति सर्वमपि । सदसद्वा भवतीत्यन्यथार्पितानर्पितविशेषात् ॥२०४॥**

टीका–उत्पत्तिरुत्पादः । विगमो विनाशः । नित्यत्वं ध्रौव्यं । सर्वमेवोत्पादव्ययध्रौव्यलक्षणं सद्भवत्यंगुलिवत् । यथा मू-

---

अव०–संयोगो रूपं अनेकेन भेदेन निर्देशः परीक्षणीयः, स्वतत्त्वं सहजं स्वरूपं, दृष्टमुपलब्धं, लक्षणैश्चिह्नैरनेकभेदं समस्तमात्मनः ॥ २०३ ॥ चित्तं चेयणसन्ना विन्नाणं धारणा य बुद्धि य । ईहा मई विअक्का जीवस्स उ लक्खणा एए ॥ १ ॥ उत्पत्तिविपत्तिस्थिरतालक्षणं यत्सर्वमपि तदस्ति अंगुलीवत् । एवं यन्नास्ति तदुत्पादादित्रयवन्न भवति खरशृंगवत् । अर्पितं विशेपितं जिनप्रवचनमुत्पन्नं । अनर्पितमविशेपितं प्राकृतजनप्रणीतं, अतीतं सप्तविकल्पवचनम् ॥ २०४ ॥

र्तत्वेनांगुलिरवस्थिता ध्रुवा, ऋजुत्वेन विनष्टा, वक्रत्वेनोत्पन्नेति । एवं यदुत्पादादित्रयवत्तदस्ति सर्वं, यन्नास्ति तदुत्पादादित्रयवदपि न भवति, खरविषाणादिवत् । अतो विकल्पद्वयमुक्तम्—स्यादस्ति स्यान्नास्तीति । सदसद्वा भवतीति तृतीयविकल्पः स्यादस्ति च नास्ति चेति । अन्यथार्पितानर्पितविशेषादिति चत्वारो विकल्पाः सूचिताः—स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति । तत्रास्ति च नास्ति चेति एकस्य घटादेर्द्रव्यस्य देशो ग्रीवादिः सद्भावपर्यायेणादिष्टो ग्रीवत्वेन, अपरश्च देशस्तथैव वस्तुनोऽसद्भावपर्यायैरादिष्टो वृत्तबुध्नत्वेन परगतपर्यायेण वा तद्वस्तु अस्ति च नास्ति चेति भावना कार्या । स्यादवक्तव्य इति सकलमेवाखंडितं तद्वस्तु अर्थान्तरभूतैः पटादिभिः पर्यायैर्निजैश्चोर्ध्वकुंडलोष्ठायतवृत्तग्रीवादिभिर्युगपदभिन्नकाले समादिष्टं नास्तीति वक्तुं न शक्यते, न चास्तीति वक्तुं पार्यते । युगपदादेशद्वयप्राप्तौ वचनविशेषातीतत्वादेवावक्तव्यमिति । अस्ति चावक्तव्यश्चेति पञ्चमो विकल्पः । तस्यैव घटादेर्वस्तुनः एको देशः सद्भावपर्यायैरादिष्टोऽपरो देशः स्वपर्यायैः परपर्यायैश्च युगपदादिष्ट तद्द्रव्यमस्ति चावक्तव्यं च । षष्ठो विकल्पः नास्ति चावक्तव्यश्च तस्यैव घटादेर्द्रव्यस्य एकदेशः परपर्यायैरादिष्टः, अपरदेशः स्वपर्यायैः परपर्यायैश्च युगपदादिष्टः, तद्द्रव्यं नास्ति चावक्तव्यं च भवति । अथ सप्तमो विकल्पः—तदेव घटादिद्रव्यं एकस्मिन् देशे स्वपर्यायैरादिष्टं, अन्यत्र देशे परपर्यायैरादिष्टं, अपरत्र देशे स्वपर्यायैः परपर्यायैश्च युगपदादिष्टं अस्ति च नास्ति चावक्तव्यं चेति । एवमयं सप्तप्रकारो वचनविकल्पः । अत्र च सकलादेशास्त्रयः—स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यः । शेषाश्चत्वारो विकलादेशाः, स्यादस्ति च नास्ति च क्रमेण भावना, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च वक्तव्यश्च,

स्यादस्ति च नास्ति चावक्तव्यश्चेति । अतोऽन्यथा चान्यथार्पितं विशेषितमुपनीतं, अनर्पितमविशेषितमनुपनीतं चेत्येतस्माद्विशेषात्सप्तविकल्पं भवतीति ॥ २०४ ॥

उत्पादादित्रयभावनायाह—

**योऽर्थो यस्मिन्नाभूत् सांप्रतकाले च दृश्यते तत्र । तेनोत्पादस्तस्य विगमस्तु तस्माद्विपर्यासः ॥२०५॥**

टीका—घटार्थो मृत्पिण्डे नास्ति नाभूदित्यर्थः । स च मृत्पिण्डश्चक्रमस्तकारोपणादिना परिकर्मविधिना वर्तमानकाले परिनिष्पन्न उपलभ्यते घटोऽयमुत्पन्न इति । तेनाकारेणोत्पादः तस्य घटस्येति । विगमस्तु विनाशः, तस्मादुत्पादाद्विपरीतः, पिंडो विनष्टो नोपलभ्यते न दृश्यते इति ॥ २०५ ॥

**सांप्रतकाले चानागते च यो यस्य भवति संबन्धी । तेनाविगमस्तस्येति स नित्यस्तेन भावेन ॥२०६॥**

टीका—वर्तमानकालेऽनागते भविष्यति च काले । चशब्दादतीतकाले । यः पदार्थो मृदादिस्वरूपं न जहाति वर्तमानघटपर्यायसंबन्धी मृन्मृदिति त्रिकालविषयः पिण्डघटकपालावस्थासु न नष्टो न विगतः स तेन भावेन मृदादिना ध्रुवो भवति नित्यः । एवं यदस्ति तत्सर्वमुत्पादव्ययध्रौव्यरूपं । न च ध्रौव्यमन्तरेणोत्पादविनाशयोर्निर्बीजयोः संभवः । क्वचि-

---

अव०—कुशूलाद्यवयवावस्थायां घटाद्यभावः । घटोऽयमुत्पन्न इति तेनाकारेण तस्य घटस्य ॥ २०५ ॥ चशब्दादतीते यस्य पदार्थस्य तेन पदार्थेन ॥ २०६ ॥

ज्ञवमुत्पादविनाशापेक्षमविनाश ( विना )-
ज्ञुत्पद्यते च वस्तु ध्रौव्यनाशवदेव । विनश्यदपि ध्रौव्योत्पादापेक्षं । ध्रुवमुत्पादविनाशापेक्षमविनाश ( विना )-
ज्ञावित्वात् परस्परमुत्पादादीनामिति ॥ २०६ ॥

अजीवानधिकृत्याह–

**धर्माधर्माकाशानि पुद्गलाः काल एव चाजीवाः । पुद्गलवर्जमरूपं तु रूपिणः पुद्गलाः प्रोक्ताः ॥२०७॥**

टीका–धर्मद्रव्यं, अधर्मद्रव्यं, आकाशद्रव्यं, पुद्गलद्रव्यं, कालद्रव्यमिति पञ्चाजीवद्रव्याणि । तत्र तेषु पञ्चसु पुद्गल-द्रव्यं रूपरसगन्धस्पर्शवत्, शेषं द्रव्यचतुष्टयमरूपं, रूपादिवर्जितमित्यर्थः । रूपिण इत्यत्र गन्धरसस्पर्शाः सर्वदा रूपावि-नाभाविन इति परमाणावपि संभवन्तीति दर्शितं भवति ॥ २०७ ॥

स्कन्धास्तु—

**द्व्यादिप्रदेशवन्तो यावदनन्तप्रदेशकाः स्कन्धाः । परमाणुरप्रदेशो वर्णादिगुणेषु भजनीयः ॥ २०८ ॥**

टीका–द्व्यादिप्रदेशभाजः स्कन्धाः संघाताः एकद्व्यणुकप्रभृतयः । द्वयोरण्वोस्त्रयाणां वेत्यादिप्रारब्धाः यावदनन्तप्र-देशाः सर्वे स्कन्धाः । परमाणुस्तु न स्कन्धशब्दाभिधेयोऽप्रदेशत्वात् । न हि तस्य द्रव्यप्रदेशाः सन्त्यन्ये । स्वयमेवासौ

---

अव०–पञ्चाजीवद्रव्याणि रूपरसगन्धस्पर्शवत् ॥ २०७ ॥ न हि द्रव्यप्रदेशाः सन्ति, अन्ये च वर्णादयः, किं तु तमेव प्रदेशं वर्णादि-पुद्गलाः सन्निहिताः स्युः ॥ २०८ ॥

प्रदेशः। प्रकृष्टो देशोऽवयवः प्रदेशः। न ततः परमन्यः सूक्ष्मतमोऽस्ति पुद्गलः। द्रव्यप्रदेशः वर्णरसगन्धस्पर्शगुणेषु भजनीयः सेवनीयः। प्रदेशत्वेन सन्निहितस्य वर्णादयोऽवयवास्तैरवयवैः सप्रदेश एवासौ द्रव्यावयवैरप्रदेश इति। यथोक्तं शास्त्रे—"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः। एकरसगन्धवर्णो द्विस्पर्शः कार्यलिंगश्च" ॥ १ ॥ इति ॥ २०८ ॥

कस्मिन् पुनर्भावे औदयिकादौ धर्मादीन्यजीवद्रव्याणि वर्तन्त इत्याह—

**भावे धर्माधर्माम्बरकालाः पारिणामिके ज्ञेयाः। उदयपरिणामिरूपं तु सर्वभावानुगा जीवाः ॥२०९॥**

टीका—अनादिपारिणामिकभावे धर्माधर्माकाशकालद्रव्याणि चत्वारि वर्तन्ते जीवभव्यत्वादिवत्। यथा चानादिः संसारस्तथा धर्मादिद्रव्यपरिणामोऽपीति। न जातुचिद्धर्मादिद्रव्यरहित आसील्लोकः। पुद्गलद्रव्यं पुनरौदयिके भावे भवति पारिणामिके च। परमाणुः परमाणुरिति अनादिपारिणामिको भावः। आदिमत्पारिणामिकस्तु द्व्यणुकादिरभ्रेन्द्रधनुरादिश्च। वर्णरसादिपारिणामिकस्तु परमाणूनां स्कन्धानां चौदयिको भावः द्व्यणुकादिसंहतिपरिणामश्चेति ॥२०९॥

जीवाः पुनः सर्वभावेषु औपशमिकादिषु वर्तन्त इति पूर्वमेव भावितम्। अथ कोऽयं लोक इत्याशंकते, किं द्रव्यान्तरमुतान्यत् किंचिदित्याह—

**जीवाजीवा द्रव्यमिति षड्विधं भवति लोकपुरुषोऽयम्। वैशाखस्थानस्थः पुरुष इव कटिस्थकरयुग्मः २१०**

---

अव०—अनादिपारिणामिकं पुद्गलद्रव्यं सर्वभावेषु औपशमिकादिषु वर्तन्ते॥२०९॥ विवृतपादस्थानस्थितो विवृतपादभ्राम्यमाणनराकार इति २१०

टीका—जीवा अजीवा धर्माधर्माकाशपुद्गलाः कालश्च षट् द्रव्याणि । लोकपुरुषः पुरुष इव लोकपुरुषः प्रतिविशिष्टस्था-
नत्वात् अत्र च जीवादीनां द्रव्याणामाधारभूतं यत्क्षेत्रं तल्लोकशब्दाभिधेयं लोकपुरुष इत्युक्तम् । तत्र निबन्धनमाह—
वैशाखस्थान इति वैशाखं धानुष्कस्य स्थानकं । ऊर्ध्वमवस्थितः पुरुषो विक्षिप्तजंघाद्यः कट्यां व्यवस्थापिताकुञ्चितहस्त-
द्यो यथा तद्वल्लोकपुरुष इति ॥ २१० ॥

तदेव वैशाखस्थानकं दर्शयति—

**तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम् । स्थालमिव तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥२११॥**

टीका—तत्र तस्मिन् लोके अधोलोकविभागः अधोमुखमल्लकाकारः । उपरि संक्षिप्तमधो विशालं वर्धमानकं अधोमुखं
भवति । रजतस्थालाकारं तिर्यग्लोकं वर्णयन्ति । तिर्यग्लोकादूर्ध्वमल्लकसंपुटाकारमूर्ध्वलोकं वर्णयन्ति। मल्लकसमुद्गश्च एकं
वर्धमानकमूर्ध्वमुखमपरं शरावमधोमुखं तस्योपरीति । एतत्प्रतिपादयति कारिका । लोकोऽधः सप्तरज्जुप्रमाणो विस्तरेण ।
तिर्यग्लोको रज्जुप्रमाणः । शरावसंपुटमध्ये पञ्चरज्जुप्रमाण उपर्येकरज्जुप्रमाण इति ॥ २११ ॥

एवमधस्तिर्यगूर्ध्वं च विभक्ते लोके को विभागः कतिविध इति दर्शयति—

**सप्तविधोऽधोलोकस्तिर्यग्लोको भवत्यनेकविधः । पञ्चदशविधानः पुनरूर्ध्वलोकः समासेन ॥ २१२ ॥**

---

अव०—तत्र लोके । अवाङ्मुखशरावाकारमधोलोकं ऊर्ध्वलोकं शरावसंपुटाकारम् ॥ २११ ॥ जंबूद्वीपादिभेदेन वैमानिकदेवलोकाः
१०, ग्रैवेयकाः ३, अनुत्तराः १, सिद्धिः १५ ॥ २१२ ॥

टीका—समासेनेति संक्षेपेण । रत्नप्रभादिभेदेन महातमःप्रभांतेन सप्तधाऽधोलोकः । तिर्यग्लोकोऽनेकप्रकारः जंबूद्वीपादिभेदेन लवणसमुद्रादिभेदेन च । असंख्येया द्वीपसमुद्रा इति । ज्योतिष्कभेदा अपि तिर्यग्लोक एव । ऊर्ध्वलोकश्च पञ्चदशभेदः । दशकल्पाः सौधर्मादयः, आनतप्राणतकावेककल्पः एकेन्द्रस्वामित्वात् । आरणाच्युतौ च । एवं दश कल्पाः । ग्रैवेयकाणि त्रीणि अधोमध्यमोपरितनभेदेन । पञ्च महाविमानानि चतुर्दशो भेदः । ईषत्प्राग्भाराख्यः पञ्चदशो भेद इति ॥२१४॥

अथाकाशं किं लोकमात्रमेवाहोश्चित्सर्वत्रेत्याह—

**लोकालोकव्यापकमाकाशं मर्त्यलौकिकः कालः । लोकव्यापि चतुष्टयमवशेषं त्वेकजीवो वा ॥२१३॥**

टीका—व्यापकमिति लोकालोकस्वरूपमुच्यते लोकस्वरूपमलोकस्वरूपं च । जीवाजीवाधारक्षेत्रं लोकस्ततः परमलोक इति । यत्राकाशे जीवाजीवादिपदार्थपञ्चकं तल्लोकाकाशं, यत्राभावो जीवादीनां तदलोकाकाशमिति जीवाद्याधारकृतो भेदोऽन्यथा एकमेवाकाशम् । मर्त्यलौकिकः कालः । मर्त्यलोको मनुष्यलोकः अर्धतृतीया द्वीपाः समुद्रद्वयं च मानुषोत्तरमहीधरेण परिक्षिप्तः । तावत्येव क्षेत्रे वर्तमानादिलक्षणः कालो न परतः । लोकव्यापिचतुष्टयमवशेषं धर्माधर्मजीवपुद्गलाख्यं । सर्वत्र लोकाकाशे धर्माधर्मौ । सूक्ष्मशरीराश्च जन्तवः सर्वलोक एव । पुद्गलाश्च परमाणुप्रभृतयः सर्वलोक इति । एकोऽपि वा जीवः सकललोकाकाशव्यापी केवलिसमुद्घातकाल एव भवतीति ॥ २१३ ॥

---

अव०—अवशेषं समस्तलोकासंख्येयभागादिकं । एको जीवः पृथिव्यादिको व्याप्नोति । वाशब्दात्समस्तलोकं । केवली समुद्घातगः केवली ॥ २१३ ॥

अत्र किमेकं द्रव्यं किं चानेकद्रव्यमित्याह—

**धर्माधर्माकाशान्येकैकमतः परं त्रिकमनन्तम् । कालं विनास्तिकाया जीवमृते चाप्यकर्तॄणि ॥ २१४ ॥**

टीका—धर्मद्रव्यमधर्मद्रव्यमाकाशद्रव्यं च त्रीण्यप्येकद्रव्याणि एकमेकं द्रव्यं धर्मः, अधर्माकाशावपि तथैव । व्योमद्रव्यं तु लोकालोकरूपमेकमेवेति प्रतिपत्तव्यं । जीवद्रव्यमनन्तसंख्यम् । तथा पुद्गलद्रव्यं कालद्रव्यमप्यनन्तसमयमतीतानागता-दिभेदेनेति । अथायमस्तिकायशब्दः किं सर्वद्रव्यविषयः ? नेत्याह—कालाद्विनाऽस्तिकायाः । कालस्तु नास्तिकायः । न प्रचयोऽस्ति समयानां । वर्तमानस्त्वेक एव समयः स नास्तिकायः । अन्यत्र प्रचयोऽस्ति । असंख्येयप्रदेशो जीवः । तथा धर्माधर्मावपि । व्योमानन्तप्रदेशं पुद्गलद्रव्यं च । जीवादृते द्रव्याणि धर्मादीनि कर्तृत्वपर्यायशून्यानि । जीवस्तु कर्ता शुभाशु-भानां कर्मणामिति ॥ २१४ ॥

कर्मादीनि द्रव्याणि कार्यमिति निर्दिशन्नाह—

**धर्मो गतिस्थितिमतां द्रव्याणां गत्युपग्रहविधाता । स्थित्युपकृच्चाधर्मोऽवकाशदानोपकृद्गगनम् ॥२१५॥**

टीका—धर्मद्रव्यं गतिमतां द्रव्याणां स्वयमेव गतिपरिणतानां उपग्रहे वर्तते जीवपुद्गलानां, न पुनरगच्छज्जीवद्रव्यं पुद्गल-द्रव्यं वा बलान्नयति धर्मः । किं तु स्वयमेव गतिपरिणतमुपगृह्यते धर्मद्रव्येण । मत्स्यस्य गच्छतो जलद्रव्यमिवोपग्राहकं ।

---

अव०—धर्मास्तिकायादयस्त्रयोऽप्यसंख्येयप्रदेशाः । जीवद्रव्यमनन्तसमयं कर्तृपर्यायशून्यानि ॥ २१४ ॥ गतिनिमित्तं स्थित्युपकारी ॥२१५॥

यथा वा व्योमद्रव्यं स्वयमेव द्रव्यस्यावगाहमानस्य कारणं भवति, न पुनरनवगाहमानं बलादवगाढं कारयति । यथा च कृषीवलानां कृष्यारंभं स्वयमेव कर्तुमुद्यतानामपेक्षाकारणं वर्षं भवति, न च तानकुर्वतः कृषीवलान् बलात् कृषिं कारयति वर्षा । यथा वा गर्जितध्वनिसमाकर्णनाद् बलाकानां गर्भाधानप्रसवौ भवतः, न च तामप्रसवतीं बलाद्गर्जितशब्दः प्रसादयति । यथा वा पुरुषः प्रतिबोधनिमित्तं पापाद्विरमति, न चाविरमन्तं पुमांसं बलात्प्रतिबोधो विरमयतीति । एवं गतिपरिणामभाजां पुद्गलजीवानामपेक्षाकारणं धर्मद्रव्यम् । तथा स्थितिमतां द्रव्याणां स्थितेरपेक्षाकारणमधर्मद्रव्यं स्वयमेव तिष्ठतां, न चातिष्ठद्द्रव्यं बलादधर्मः स्थापयति । एवं स्थितिमतां द्रव्याणां स्थित्युपकारी भवत्यधर्मः । गगनं तु जीवपुद्गलानामवगाहमानानामवकाशदानेन व्याप्रियते ॥ २१५ ॥

पुद्गलद्रव्यं कमुपकारं विधत्त इत्याह—

**स्पर्शरसगन्धवर्णाः शब्दो बन्धश्च सूक्ष्मता स्थौल्यम् । संस्थानं भेदतमश्छायोद्योतातपश्चेति ॥ २१६ ॥**

टीका—स्पर्शादयः पुद्गलद्रव्यस्योपकाराः । तथा शब्दपरिणामः पुद्गलानामेवोपकारः । बन्धनं बन्धः कर्मपुद्गलानामात्मप्रदेशानां च क्षीरोदकवत् एकलोलीभावः पुद्गलद्रव्यस्योपकारः । सूक्ष्मतापरिणामः पुद्गलानामुपकारोऽनन्तप्रदेशानां स्कन्धानाम् । तथा स्थौल्यपरिणामोऽभ्रेन्द्रधनुरादीनां, संस्थानं चतुरस्रादि पुद्गलोपकारः । भेदः खंडरूपं सोऽपि पुद्गल-

---

अव०—सूक्ष्मता परिणामः स्कन्धानामेव तत्सद्भावेन ते इन्द्रियग्राह्याः साक्षात्, भेदो द्व्यादिस्कंधानां पृथग्भवनं । स्पर्शादयः पुद्गलद्रव्यस्योपकाराः । शब्दपरिणामः पुद्गलद्रव्याणामुपकारः कर्मपुद्गलानां बन्धः क्षीरनीरवत्, इन्द्रधनुरादिः ॥ २१६ ॥

परिणामः । तमोऽन्धकारः परिणामः पुद्गलद्रव्याणामेवोपकारः । छायापि पुद्गलपरिणामः । उद्योतश्चन्द्रतारकादीनां पुद्गलपरिणामः । आतपो दिनकरादीनां पुद्गलपरिणामः ॥ २१६ ॥

**कर्मशरीरमनोवाग्विचेष्टितोच्छ्वासदुःखसुखदाःस्युः।जीवितमरणोपग्रहकराश्च संसारिणः स्कन्धाः॥२१७॥**

टीका—कर्म ज्ञानावरणादि पुद्गलोपकारः । शरीरमौदारिकादि पुद्गलपरिणामः । मनोवाक्कायाः पुद्गलपरिणामः । विचेष्टितं क्रिया पुद्गलपरिणामः । उच्छ्वासः प्राणापानौ पुद्गलपरिणामः । दुःखं सुखं चेति पुद्गलजनितमेव । जीवितोपग्रहकराः क्षीर-घृतादिपुद्गलाः,मरणोपग्रहकरा विषगरादिपुद्गलाः,सर्वेऽप्येते पुद्गलानामुपकाराः। संसारिजीवविषयाः स्कन्धरूपेण परिणतानां न परमाणुरूपेणेति ॥ २१७ ॥

कालकृतोपकारदर्शनायाह—

**परिणामवर्तनाविधिः परापरत्वगुणलक्षणः कालः। सम्यक्त्वज्ञानचारित्रवीर्यशिक्षागुणा जीवाः ॥२१८॥**

टीका—परिणामस्तावद्वर्धतेऽङ्कुरो हीयते वाऽपक्षीयते विनश्यतीत्यादिकः कालजनित उपकारः । वर्तनेति—वर्तत इदं कालापेक्षमेतदभिधानं प्रयुञ्जते विद्वांसः। वर्तनाया विधिः प्रकार उक्तेन न्यायेन । परत्वमपरत्वं च कालकृतं । पञ्चाशद्व-

---

अव०—विचेष्टितानि विविधव्यापारोत्क्षेपणाकुंचनादय उपग्रहः सौभाग्यादश्यीकरणादिः जीवितदं क्षीरघृतादि, मरणदं विषास्त्रादि, संसारिजीवविषयाः ॥ २१७ ॥ परिणमनं परिणामः । यथा वर्धतेऽङ्कुरो हीयते वा इत्यादिकालजनित उपकारः । इदं वर्तत इदं न वर्तते वर्तनायाः, परत्वमपरत्वं कालकृतं । पञ्चाशद्वर्षात्पञ्चविंशतिवर्षोऽपरः, पञ्चवर्षाद्दशवर्षः परः। शिक्षा लिप्यादिग्रहणासेवनादिर्वा ॥२१८॥

षांत्पञ्चविंशतिवर्षोऽपरः, पञ्चविंशतिवर्षात्पञ्चाशद्वर्षोऽपरः । एवं परिणामादिगुणलक्षणः कालः परिणामादिर्निर्यथोक्तैर्ल-
क्ष्यत इत्यर्थः । अथ जीवाः केनोपकारेणोपकुर्वते? सम्यक्त्वाद्युत्पादनेन । तत्र तत्त्वार्थश्रद्धानलक्षणं सम्यक्त्वमुत्पादयंति ।
ज्ञानं श्रुताद्यधिगमयन्ति । चारित्रं क्रियानुष्ठानमुपदिशन्ति । वीर्यं शक्तिविशेषं दर्शयन्ति । शिक्षा लिप्यक्षरादिसंविज्ञानं
जनयन्ति । एते जीवक्रिया उपकाराः ॥ २१७ ॥

एवं जीवाजीवानभिधाय प्रपञ्चेन पुण्यापुण्यपदार्थद्वयमभिधित्सुराह—

**पुद्गलकर्म शुभं यत्तत्पुण्यमिति जिनशासने दृष्टम्। यदशुभमथ तत्पापमिति भवति सर्वज्ञनिर्दिष्टम् ॥२१८**

टीका—द्विचत्वारिंशत्प्रकृतयः शुभाः पुण्याभिधानाः । द्व्यधिकाशीतिरप्रशस्तप्रकृतीनां पापाभिधाना एवमाहुः सर्वज्ञा
इति आगमग्राह्यः पदार्थोऽयमिति प्रतिपादयति ॥ २१८ ॥

आश्रवसंवरौ निरूपयति—

**योगः शुद्धः पुण्याश्रवस्तु पापस्य तद्विपर्यासः । वाक्कायमनोगुप्तिर्निराश्रवः संवरस्तूक्तः ॥ २२० ॥**

टीका—योगो मनोवाक्कायाख्यः स खल्वागमपूर्वको व्यापारः स्वेच्छाकृतः स पापस्याश्रव इति। सर्वेषामाश्रवाणां निरोधो
गुप्तिसमितिपुरस्सरः नियमितमनोवाक्कायक्रियस्य संवरो भवति स्थगिताश्रवद्वारस्येत्यर्थः ॥ २२० ॥

---

अव०—द्विचत्वारिंशत्प्रकृतयः पुण्यं, द्व्यशीतिः पापम् ॥ २१९ ॥ आगमपूर्वो मनोवाक्कायव्यापारः तस्य योगस्य विपरीतता गुप्ति-
गोंपनं स्थगितास्रवद्वारः ॥ २२० ॥

निर्जरणबन्धमोक्षप्रतिपादनायाह—

**संवृततपउपधानं तु निर्जरा कर्मसन्ततिर्बन्धः। बन्धवियोगो मोक्षस्त्विति संक्षेपान्नव पदार्थाः ॥२२१॥**

टीका—एवं संवृताश्रवद्वारस्य तपसि यथाशक्ति घटमानस्यापूर्वकर्मप्रवेशनिरोधे सति पूर्वार्जितस्य कर्मणः तपसा क्षयः। निर्जरा निर्जरणं। उपधानमिवोपधानं शिरोधरायाः सुखहेतुर्यथा तथा तपोऽपि जीवस्य सुखहेतुत्वादुपधानमुच्यते। कर्मसन्ततिर्बन्धः कर्मणां ज्ञानावरणादीनां सन्ततिरविच्छेदो बन्धः कर्मत एव कर्मोपादानमात्मन इत्यर्थः। कार्त्स्न्येन बन्धवियोगो मोक्षः। द्वाविंशत्युत्तरेऽपि कर्मप्रकृतिशते निःशेषतः क्षीणे मोक्षो भवति। इत्युक्ताः संक्षेपतो नव पदार्थाः ॥२२१॥

सम्यग्दर्शनस्वरूपनिरूपणार्थमाह—

**एतेष्वध्यवसायो योऽर्थेषु विनिश्चयेन तत्त्वमिति। सम्यग्दर्शनमेतच्च तन्निसर्गादधिगमाद्वा ॥२२२॥**

टीका—एतेषु जीवादिपदार्थेषु योऽध्यवसायो विनिश्चयेन परमार्थेन, न दाक्षिण्याद्यनुवृत्त्या, तत्तत्त्वमिति सत्यं तथ्यं तद्भूतमित्यर्थः। एतदेवंप्रकारं सम्यग्दर्शनं, तत्तु द्विहेतुकं निसर्गादधिगमाद्वेति। निसर्गः स्वभावः संसारे परिभ्रमतो जीवस्यानाभोगपूर्वकं कर्म क्षपयतो ग्रन्थिस्थानप्राप्तस्यापूर्वकरणलाभात् ग्रन्थिं विदारयतः शुभाध्यवसायस्य विभिन्नग्रन्थेरनिवृत्ति-

---

अव०—संवृतात्मनस्तपसा पूर्वार्जितस्य कर्मणः क्षयः। उपधानं योगोद्वहनादि तेन नव्यकर्मप्रवेशाभावः ॥ २२१ ॥ जीवादिषु निश्चयेन परिणामः सद्भूतमिति ॥ २२२ ॥

करणप्राप्तौ शुभपरिणामस्य स निसर्गतः स्वभावादेव तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमुत्पद्यते । भगवत्प्रतिमादर्शनात्साधुदर्शनाद्वा शुभपरिणामः निसर्गः स्वभावश्चैकार्थाः। कदाचिद्ग्रन्थौ भिन्ने शिष्यमाणस्यागमोपदेशादाकर्णयतः शृण्वतोऽभिगमसम्यग्दर्शनमुत्पद्यते ॥ २२२ ॥

एतदेव दर्शयति—

**शिक्षागमोपदेशश्रवणान्येकार्थिकान्यधिगमस्य । एकार्थः परिणामो भवति निसर्गः स्वभावश्च ॥२२३॥**

टीका—उक्तार्था कारिका इयम् ॥ २२३ ॥

**एतत्सम्यग्दर्शनमनधिगमविपर्ययौ तु मिथ्यात्वम् । ज्ञानमथ पञ्चभेदं तत्प्रत्यक्षं परोक्षं च ॥ २२४ ॥**

टीका—एतद्द्विप्रकारं सम्यग्दर्शनमाधिगमिकं नैसर्गिकं च । एतद्विपरीतं मिथ्यात्वमनधिगमलक्षणं तत्त्वार्थाश्रद्धानं । अतत्त्वबुद्धिरिति विपर्ययः । ज्ञानं मत्यादिभेदेन पञ्चधा । तत्समासतो द्विधा—प्रत्यक्षं परोक्षं च । तत्र प्रत्यक्षमवधिमनःपर्यायकेवलाख्यमक्षस्यात्मनः साक्षादिन्द्रियनिरपेक्षं क्षयोपशमजं क्षयोत्थं च । मतिश्रुते परोक्षमिन्द्रियानिन्द्रियनिमित्तमिन्द्रियद्वारकं न पुनरात्मनः साक्षाद्धूमादग्निज्ञानवत् । इन्द्रियमनोज्ञानावरणक्षयोपशमजन्यं परोक्षमिति ॥ २२४ ॥

---

अव०—शिक्षा जिनोदितक्रियाकलापाभ्यासः पुनः पुनः ॥ २२३ ॥ एतद्द्विप्रकारं विस्तराधिगमो विस्तरपरिच्छेदः विपरीतार्थग्राही प्रत्ययो विपर्ययः, समासतो द्वेधा ॥ २२४ ॥

**तत्र परोक्षं द्विविधं श्रुतमाभिनिबोधिकं च विज्ञेयम् । प्रत्यक्षं चावधिमनःपर्यायौ केवलं चेति ॥२२५॥**

टीका–श्रुतमागमोऽतीन्द्रियविषयो यथार्थपरिच्छेदित्वात् प्रमाणम् । आभिनिबोधिकं मतिरिति तुल्यार्थौ । सा च मानसी मतिरर्थावग्रहाद्या । ततः परं द्विबहुद्वादशविधं श्रुतं भवति । प्रत्यक्षं पुनरवध्यादित्रयम् । मिथ्यादर्शनपरिग्रहान्मतिश्रुतावधयो विपर्ययश्चाज्ञानमपि भवतीति ॥ २२५ ॥

**एषामुत्तरभेदविषयादिभिर्भवति विस्तराधिगमः । एकादीन्येकस्मिन् भाज्यानि त्वाचतुर्भ्य इति ॥२२६॥**

टीका–एषां मत्यादिज्ञानानामुत्तरभेदविषयादिभिर्विस्तराधिगमो भवति । तत्रेन्द्रियानिन्द्रियभेदाद्द्विविधं मतिज्ञानं । अवग्रहादिभेदाच्चतुर्विधम् । बह्वादिभेदादनेकधा । श्रुतमप्यंगबाह्यांगप्रविष्टभेदाद्द्वेधा । अंगबाह्यमनेकप्रकारम् आवश्यकाद्यंगप्रविष्टमप्याचारादिद्वादशविधम् । तत्र परोक्षमसर्वद्रव्यविषयम् । अवधिर्जघन्यमध्यमोत्कृष्टादिभेदेनानेकधा रूपिद्रव्यनिबन्धनः । मनःपर्यायज्ञानमपि ऋजुविपुलमत्यादिभेदमवधिज्ञानविषयीकृतद्रव्यानन्तभागनिबन्धनं विशुद्धतरं चेति । एवं विस्तराधिगमः । आदिग्रहणात्क्षेत्रकालविभागोऽपि द्रष्टव्यः । अथैतानि पञ्च ज्ञानान्येकस्मिन्नात्मनि युगपत् कियन्ति

---

अव०–आभिनिबोधिकं मतिज्ञानम् ॥ २२५ ॥ ज्ञानानां क्रमेणाष्टाविंशतिचतुर्दशषड्द्विभेदा उत्तराः । विषयो गोचरो मतिश्रुतयोः सामान्यतः सर्वद्रव्येषुसर्वपर्यायेषु । अवधिरूपिषु । मनःपर्यायं मनोगतद्रव्येषु । केवलं तु सर्वद्रव्यसर्वपर्यायेषु । आदिशब्दात्क्षेत्रकालादिपरिग्रहः । एकस्मिन् जीवे युगपदेकादीनि कियन्ति भाज्यानि भजनीयानि । चत्वारि यावत्केवलावाप्तावपरज्ञानाभावः ॥ २२६ ॥

भवन्तीत्याह—एकादीनीत्यादि । एकं मतिज्ञानं जघन्यतः श्रुतज्ञानमक्षरात्मकं सर्वत्र न संभवतीत्येवमुक्तमेकं मतिज्ञानमिति । अन्यथा भावश्रुतं सर्वजीवानामागमेऽभिहितम् । तथा कदाचिन्मतिश्रुते द्वे भवतः । कदाचित्त्रीणि मतिश्रुतावधिज्ञानानि । कदाचिन्मतिश्रुतावधिमनःपर्यायज्ञानानीति । न जातुचित्पञ्चापि युगपत्संभवन्तीति ॥ २२६ ॥

सम्यग्ज्ञानमिथ्याज्ञानयोः किंकृतो भेद इत्याह—

**सम्यग्दृष्टेर्ज्ञानं सम्यग्ज्ञानमिति नियमतः सिद्धम्।आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसंयुक्तम्॥२२७॥**

टीका—सम्यग्दृष्टिस्तत्त्वार्थश्रद्धानलक्षणसम्यग्दर्शनसंपन्नः शंकादिशल्यरहितस्तस्य यज्ज्ञानं तत्सम्यग्ज्ञानम् । यथावस्थितपदार्थपरिच्छेदित्वात् । नियमेनैवाव्यभिचारि सिद्धम् । आद्यत्रयमज्ञानमपि । मिथ्यादर्शनयोगात् मतिश्रुतावधयः सदसद्विशेषपरिज्ञानाद्यदृच्छातो वाऽसदुपलब्धेरुन्मत्तवत् ज्ञानफलाभावाच्च मिथ्यादृष्टेरज्ञानमेव ॥ २२७ ॥

सम्यग्दर्शनसम्यग्ज्ञाने निरूप्य चारित्रप्रतिपादनार्थमाह—

**सामायिकमित्याद्यं छेदोपस्थापनं द्वितीयं तु । परिहारविशुद्धिकं सूक्ष्मसंपरायं यथाख्यातम् ॥२२८॥**

---

अव०—मतिश्रुतावधयः ॥ २२७ ॥ समो रागद्वेषविकलस्तस्य आयो लाभस्तत्र भवं सामायिकं । प्राक्तनपर्यायच्छेद उत्तरपर्यायस्थापनं । परिहरणं परिहारस्तेन विशुद्धं । सूक्ष्मोऽत्यन्तकिट्टीकृतः संपरायो लोभकषायः सूक्ष्मसंपरायगुणस्थानवर्तिनः । अकषायं यथाख्यातम् ॥ २२८ ॥

टीका—अरक्तद्विष्टः समः तस्य आयो लाभ उपचयो ज्ञानादेः समायः स प्रयोजनमस्येति सामायिकं । प्रथमपश्चिम-तीर्थंकरयोरित्वरं सामायिकं । मध्यमतीर्थंकराणां यावज्जीविकम् । पूर्वपर्यायच्छेदादुत्तरपर्यायोत्थापनं छेदोपस्थापनम् । प्रथम-पश्चिमतीर्थंकरयोरेव तीर्थे । परिहारविशुद्धिकं परिहारेण आचाम्लवर्जिताहारपरिहारेण तत्परित्यागेन विशुद्धिः कर्म यत्र तत्परिहारविशुद्धिकं । अधीतनवमपूर्वतृतीयाचारवस्तूनां साधूनां गच्छविनिर्गतानां पारिहारिककल्पस्थितित्वेन त्रिधा स्थितानां ग्रीष्मशिशिरवर्षासु चतुर्थादिद्वादशान्तभक्तभोजिनामाचाम्लेनैव पारिहारिकाणां च प्रतिदिनाचाम्लभोजिनां कल्पस्थितस्य च एकैकस्य वर्गस्य षाण्मासावधितपोऽनुष्ठानं परिहारविशुद्धिकमुच्यते । तथा सूक्ष्मसंपरायं संपरायः कषायो यस्य सूक्ष्मो लोभाख्यस्तत्सूक्ष्मसंपरायं दशमगुणस्थानवर्तिनश्चारित्रं भवति । यथाख्यातं तूपशान्तकषायस्य क्षीणकषायस्य चैकादशे द्वादशे च गुणस्थाने वर्तमानस्य भवति । यथा भगवद्भिराख्यातं येन प्रकारेण कथितं कथं वाख्यातमकषा-यस्य चारित्रमित्येवमाख्यातम् ॥ २२८ ॥

**इत्येतत् पञ्चविधं चारित्रं मोक्षसाधनं प्रवरम् । अनेकानुयोगनयप्रमाणमार्गैः समनुगम्यम् ॥ २२९ ॥**

टीका—पञ्चविधं सामायिकादियथाख्यातपर्यन्तम् अष्टविधकर्मचयरिक्तीकरणाच्चारित्रं । मोक्षसाधनं सम्यग्ज्ञानपूर्वकं क्रियानुष्ठानं । प्रवरं प्रधानं । अनेकेनानुयोगद्वारमार्गेण, अनेकेन च नयमार्गेण नैगमादिना, तथा प्रमाणमार्गेण प्रत्यक्ष-परोक्षगोचरेण । समनुगम्यं समधिगम्यं ज्ञेयमित्यर्थः ॥ २२९ ॥

---

अव०—अनेकैर्बहुप्रकारैः अनुयोगैः किं कतिविधं कस्येत्यादिभिर्नयैर्नैगमादिभिः प्रमाणैः प्रत्यक्षादिभिः समनुगम्यं ज्ञेयम् ॥ २२९ ॥

सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रं च किं समुदितमेव साधनमाहोश्विदेकैकमपीत्याशंक्याह—

**सम्यक्त्वज्ञानचारित्रसंपदः साधनानि मोक्षस्य। तास्वेकतराभावेऽपि मोक्षमार्गोऽप्यसिद्धिकरः ॥२३०॥**

टीका—समुदितमेव त्रितयमविकलं मोक्षसाधनम् । एकतराभावेऽप्यसाधनमिति । एताः सम्यक्त्वादिसंपदः परस्परापेक्षा एव मोक्षं साधयन्ति, त्रिफलाव्यपदेशवत् । एकतराभावे तु साधनाभावः, न मोक्षं साधयन्तीत्यर्थः ॥ २३० ॥

**पूर्वद्वयसंपद्यपि तेषां भजनीयमुत्तरं भवति । पूर्वद्वयलाभः पुनरुत्तरलाभे भवति सिद्धः ॥२३१॥**

टीका—सम्यग्दर्शनसम्यग्ज्ञानयोः सतोरपि चारित्रसंपत् कदाचिद्भवति कदाचिन्नेति भजनीयमुत्तरं चारित्रमित्यर्थः । यदा पुनश्चरणं लब्धं तदा पूर्वद्वयलाभो नियमेनैव । न हि सम्यग्दर्शनज्ञानाभ्यां विना चरणसंभवः, तत्पूर्वकत्वाच्चारित्रस्य । तस्माच्चरणलाभाविनाभूते सम्यक्त्वसम्यग्ज्ञाने ॥ २३१ ॥

कथं पुनः सम्यक्त्वादिसाधनमाराध्यमविकलमनुष्ठेयमित्याह—

**धर्मावश्यकयोगेषु भावितात्मा प्रमादपरिवर्जी । सम्यक्त्वज्ञानचारित्राणामाराधको भवति ॥ २३२ ॥**

टीका—धर्मे दशविधे क्षमादिके आवश्यकेषु । तानि चावश्यकानि—प्रतिक्रमणालोचनस्वाध्यायप्रत्युपेक्षणप्रमार्जननि-

---

अव०—एकतरस्याः सम्यग्दर्शनादिसंपदः अभावेऽपि । अपिः पूरणे । मोक्षमार्गोऽपि मुक्तिप्रापकोऽपि न सिद्धिकरः त्रिफलाव्यपदेशवत् ॥ २३० ॥ चारित्रं दर्शनज्ञानलाभे, चारित्रलाभे ॥ २३१ ॥ धर्मो दशविधः आवश्यकानि प्रतिक्रमणालोचनादीनि ॥ २३२ ॥

र्गमप्रवेशादीन्यवश्यकरणीयानि तेषु । भावितात्मा श्राद्धः समस्तप्रमादपरिहारी सम्यक्त्वादिसाधनानामाराधको भवति परिसमापयिता भवतीत्यर्थः ॥ २३२ ॥

**आराधनाश्च तेषां तिस्रस्तु जघन्यमध्यमोत्कृष्टाः । जन्मभिरष्टत्र्येकैः सिध्यन्त्याराधकास्तासाम् ॥२३३॥**

टीका—तेषां सम्यक्त्वादीनामाराधनास्तिस्रो जघन्यमध्यमोत्कृष्टभेदेन संभवन्ति । तत्र जघन्याष्टभिर्जन्मभिर्देवमनुष्येषूपजातस्य भवति, अष्टाभिस्तेषां भवैरन्तं याति सिद्धिं प्राप्नोतीत्यर्थः । मध्यमा त्वाराधना जन्मत्रयेण मनुष्यजन्मपूर्विका । उत्कृष्टा त्वाराधना एकेनैव भवेन मरुदेव्या इव भवति । एवमाराधकास्तान्याराधयन्तीति ॥ २३३ ॥

**तासामाराधनतत्परेण तेष्वेव भवति यतितव्यम् । यतिना तत्परजिनभक्त्युपग्रहसमाधिकरणेन ॥२३४॥**

टीका—तासां सम्यक्त्वज्ञानचारित्रसंपदाम् । आराधनतत्परेण तत्रैव व्यग्रेण । तेष्वेव सम्यक्त्वादिषु यतितव्यं भवति । यतिना साधुना । तत्परजिनभक्त्युपग्रहसमाधिकरणेन तत्पर इति सत्त्वादिपरेण जिनभक्तौ समुद्यतेन भगवतामर्हतां यथाकालं वन्दनगुणोत्कीर्तनपरेण उपग्रहो भगवद्बिम्बप्रतिष्ठाफलकथनादि । अथवा साधूनामुपग्रहो वस्त्रपात्रभक्तपानादि समाध्युत्पादनेन च साधूनाराधयति प्रयत्नमेव कुर्वन्निति ॥ २३४ ॥

---

अव०—सम्यक्त्वादीनां जघन्याद्याराधनानाम् ॥ २३३ ॥ सम्यक्त्वादिसंपदां तत्परेण व्यग्रेण । तेष्वेव सम्यक्त्वादिषु । तत्परेषु साधुषु जिनेषु भक्तिरान्तरा प्रीतिः । उपग्रहस्तदुचितान्नपानशयनासनादिप्रदानरूपः समाधिः स्वास्थ्यं स्वपरयोः । एतेषां करणेन ॥२३४॥

तमेव यत्नं प्रपञ्चेन दर्शयति–

**स्वगुणाभ्यासरतमतेः परवृत्तान्तान्धमूकबधिरस्य । मदमदनमोहमत्सररोषविषादैरधृष्यस्य ॥ २३५ ॥**

टीका–स्वगुणाः सम्यक्त्वज्ञानचरणाख्याः साधुगुणास्तेष्वभ्यास आवृत्त्यनुष्ठानं तत्र रता सक्ता मतिर्यस्यासौ स्वगुणाभ्यासरतमतिः । स हि परवृत्तान्ते परवार्तायां परचेष्टितेऽन्धः, न पश्यति परदोषान् गुणान् वा । स्वगुणेष्वेव सम्यक्त्वादिषु व्यग्रत्वात् । न च परदोषान् गुणान् वा उद्घट्टयति मूक इव तदुद्घट्टने न वाऽन्येन परगुणदोषानुद्घाट्यमानान् बधिर इव शृणोतीति । मदो गर्वः । मदनः कामः । मोहो हास्यरत्यादिः । मत्सरश्चित्तस्थ एव कोपो न बहिः प्रकटः । नो क्रोष्टारमाहन्तारं वा प्रतिभिनत्ति । रोषस्तु रक्तनयनाक्रोशताडनादिः बहिर्लिंगः । विषादः स्वजनादिव्यापत्तावुपकरणादिनासेवा । एभिर्मदादिभिरधृष्यस्यानभिभूतस्य ॥ २३५ ॥

**प्रशमाव्याबाधसुखाभिकांक्षिणः सुस्थितस्य सद्धर्मे ।**

**तस्य किमौपम्यं स्यात्सदेवमनुजेऽपि लोकेऽस्मिन् ॥ २३६ ॥**

टीका–प्रशमसुखाभिकांक्षिणः अव्याबाधमोक्षसुखकांक्षिणश्च । सद्धर्मे मूलोत्तरलक्षणे । सुस्थितस्य निश्चलस्य । तस्यैवं-

---

अव०–यत्नमेव प्रपञ्चयति–गुणानां ज्ञानादीनां परतस्तिषु अधृष्यस्याधर्षणीयस्य । मत्सरश्चित्तस्थ एव कोपः ॥ २३५ ॥ प्रशम एव निराबाधसुखं सदाचारे रतस्य साधोरिति । तस्य किं साधर्म्यं सुरासुरनरलोकेऽस्मिन् ॥ २३६ ॥

विधस्य साधोः केनोपमानं क्रियेत । अस्मिन् लोके सदेवमानुषे । नास्त्येव देवेषु मानुषेषु वा प्रशमसुखतुल्यं सुखं, दूरत एव मोक्षसुखमिति ॥ २३६ ॥

अपि च

**स्वर्गसुखानि परोक्षाण्यत्यन्तपरोक्षमेव मोक्षसुखम् । प्रत्यक्षं प्रशमसुखं न परवशं न व्ययप्राप्तम् ॥२३७॥**

टीका--स्वर्गो मोक्षश्च परोक्षं तत्र यत्सुखम् । तद्द्वयमपि परोक्षमागमगम्यम् । मोक्षसुखमत्यन्तपरोक्षमेव । अत्यन्त-मिति सुतरां परोक्षम् । स्वर्गसुखस्य केनचिद्विशेषेण किंचिदिह उपमानं स्यात्, न तु मोक्षसुखस्येति । अतोऽत्यन्तपरोक्षम् । सर्वप्रमाणज्येष्ठेन प्रत्यक्षेण स्वात्मवर्तिना परिछिद्यमानं प्रशमसुखं न च पराधीनं स्वायत्तमेव । नापि व्ययप्राप्तं, स्वाधीनत्वादेव । यतस्तन्न व्येति न विगच्छति । वैषयिकं तु सुखं परवशं विषयाधीनं, विषयाभावे तु न भवतीति ॥२३७॥

**निर्जितमदमदनानां वाक्कायमनोविकाररहितानाम् । विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम् ॥२३८॥**

टीका--न्यत्कृतगर्वकामानां स्वस्थीभूतचेतसां शान्तानां वागादिविकाररहितानाम् । वाग्विकारो हिंस्रपरुषानृतादिः । कायविकारो धावनवल्गनादिः । मनोविकारोऽभिद्रोहाभिमानेर्ष्यादिः । एभिर्विरहितानाम् । विनिवृत्ता परविषया आशा येषां ते विनिवृत्तपराशाः । परस्मादिदं लभ्यं धनधान्यरजतादि केवलं तु परकृतभिक्षामात्रोपजीविनः । सोऽपि यदि

---

अव०—न केनापि व्ययं प्रापितं बाधितम् ॥ २३७ ॥ विनिवृत्ता परस्मिन्नाशा येषाम् ॥ २३८ ॥

लभ्यते प्रवचनोक्तेन विधिना ततः साधु, ज्ञानचारित्रोपकारित्वात् । न लभ्यते चेत्ततः शुभाशयस्य निर्जरैवेति । एवंविधानां यतीनामिहैव मोक्षः मोक्षसुखमुपमानमुपमेयं प्रशमसुखमिति ॥ २३८ ॥

**शब्दादिविषयपरिणाममनित्यं दुःखमेव च ज्ञात्वा। ज्ञात्वा च रागद्वेषात्मकानि दुःखानि संसारे॥२३९॥**

टीका–शब्दादयो विषयाः शब्दरूपरसगन्धस्पर्शास्तेषां परिणामः इष्टानिष्टता शब्दादिविषयपरिणामाच्च यत्सुखं तदनित्यम् । विषयसन्निधौ भवति, तदभावे च न भवतीत्यनित्यम् । अपि च दुःखमेवेदं वैषयिकं सुखं पामनपुरुषकण्डूतिसुखवत् । दुःखमेवायं सुखाभिमानोऽल्पचेतसाम् । एवं विज्ञाय ज्ञात्वा च । रागद्वेषात्मकानि रागद्वेषपरिणतिजातानि रागद्वेषानुविद्धानि दुःखानि संसारे करोतीदम् ॥ २३९ ॥

**स्वशरीरेऽपि न रज्यति शत्रावपि न प्रदोषमुपयाति। रोगजरामरणभयैरव्यथितो यः स नित्यसुखी॥२४०॥**

टीका–निजशरीरकेऽपि न रज्यति रागं न करोति स्नेहमित्यर्थः । शत्रावपि न प्रदोषं प्रद्वेषं करोति । रोगो ज्वरादिः । जरा वयोहानिः । प्राणनाशो मरणम् । भयमिहलोकादिसप्तप्रकारम् । अपिशब्दश्चार्थे । एभिश्च न व्यथितः संपतद्भिरपि न बाधितः । एभ्यो न भीतो यः स नित्यमेव सुखी नित्यसुखीति ॥ २४० ॥

---

अव०–शब्दादीनां विषयाणां परिणाममन्यथाभवनरूपं दुःखहेतुमेव च संप्रधार्य संसारे दुःखान्येव रागद्वेषात्मकानि ॥ २३९ ॥ प्रदोषं प्रद्वेषं अव्यथितोऽपीडितः ॥ २४० ॥

धर्मध्यानाभिरतस्त्रिदण्डविरतस्त्रिगुप्तिगुप्तात्मा । सुखमास्ते निर्द्वन्द्वो जितेन्द्रियपरीषहकषायः ॥२४१॥

टीका—धर्मादनपेतं धर्म्यं ध्यानमाज्ञाविचयादि, तत्राभिरतस्तत्परस्तत्र सक्तः । मनोवाक्कायाख्याद्दण्डत्रयाद्विरतः । अनागमको मनोवाक्कायव्यापारो दण्डः । तिस्रो गुप्तयस्ताभिर्गुप्तात्मा । मौनी निरवद्यभाषी । वाक्का(कृतका)योत्सर्गः प्रवचनोक्तविधिना गामी वा धर्मध्यायी निरुद्धार्तरौद्राध्यवसायः सुखमास्ते निराबाधमशेषक्रियानुष्ठानं कुर्वन् । निर्द्वन्द्वः निर्गतसकलोपद्रवः एकाकी निष्कलहो वा जितानीन्द्रियाणि वशे स्थापितानि । परीषहाः सम्यक् सह्यन्ते । कषायाणामुदयो निरुद्ध उदितो वा विफलीकृतः । स एवंविधः सुखमास्ते ॥ २४१ ॥

विषयसुखनिरभिलाषः प्रशमगुणगणाभ्यलंकृतः साधुः । द्योतयति यथा सर्वाण्यादित्यः सर्वतेजांसि २४२

टीका—शब्दादिजनिते विषयसुखे निर्गताभिलाषो निर्गतेच्छः । प्रशमगुणा ये स्वाध्यायसन्तोषादयस्तेषां गणः समूहस्तेनालंकृतो विभूषितः । साधुर्भास्कर इव । द्योतयति अभिभवति तारकादिप्रभां स्वप्रभया तिरोभाव्य स्वतेज एव प्रकाशयति सर्वाणीत्यशेषाणि तेजांस्यभिभवतीत्यर्थः । तद्वत्साधुरुक्तगुणयुक्तः सर्वतेजांसि देवमनुष्यादीनामभिभूय प्रकाशते स्वतेजसेति ॥ २४२ ॥

---

अव०—मौनी निरवद्यभाषी, एकाकी निष्कलहो वा, वशे स्थापितानि, परीषहाः सम्यक् सह्यन्ते, कषायाणामुदयो निरुद्धः ॥२४१॥ शब्दादिसंगे निःस्पृहः, प्रशमगुणाः स्वाध्यायादयः तेषां समूहस्तेन विभूषितोऽभिभवति देवमनुष्यादीनां नारकादीनां च ॥ २४२ ॥

**सम्यग्दृष्टिर्ज्ञानी विरतितपोबलयुतोऽप्यनुपशान्तः। तं न लभते गुणं यत् प्रशमसुखमुपाश्रितो लभते॥२४३**

टीका–सम्यग्दर्शनसंपन्नः सम्यग्ज्ञानसंपन्नश्च। विरतितपोबलयुतोऽपि विरत्या मूलोत्तरगुणेन युक्तोऽपि, तपोबलेन च संपन्नः। अनुपशान्तः क्रोधादिकषायोदयादलब्धप्रशमः। तं गुणं न लभते कषायोदये वर्तमानः, यं गुणं प्रशमगुणमाश्रितः प्राप्नोति। प्रशमस्थस्य हि प्राग्वर्णिता एव गुणाः। तस्मादुपशान्तकषायेण भवितव्यमिति॥ २४३॥

तथा शीलांगानामविकलानामेवंविध एव निष्पादको भवतीति दर्शयति—

**सम्यग्दृष्टिर्ज्ञानी विरतितपोध्यानभावनायोगैः। शीलांगसहस्राष्टादशकमयत्नेन साधयति॥ २४४॥**

टीका–सम्यग्दर्शनसम्यग्ज्ञानसंपन्नो विरत्या मूलोत्तरगुणस्वरूपया। तपसा चाऽनशनादिना। ध्यानेन च धर्मादिना। भावनाभिश्चानित्यादिकाभिर्योगैश्च प्रशस्तैर्मनोवाक्कायव्यापारैः। शीलांगसहस्राणामष्टादशकं अष्टादश शीलांगसहस्राणीत्यर्थः। अयत्नेनानायासेन लीलयैव। साधयति स्वीकरोतीति॥ २४४॥

कानि पुनस्तान्यष्टादशशीलांगसहस्राणीति केन चोपायेनाभिगम्यानीत्याह—

**धर्माद्भूम्यादीन्द्रियसंज्ञाभ्यः करणतश्च योगाच्च। शीलांगसहस्राणामष्टादशकस्य निष्पत्तिः॥ २४५॥**

---

अव०–विरतिः पापविरमणं, ध्यानं धर्मध्यानादि भावना अनित्याद्याः योगा आवश्यकादिव्यापाराः, सुखेन॥ २४४॥ धर्मात् "खंतीयमज्ज १०"। भूम्यादिजीवानव अजीवा १०। करणकारणानुमतित्रयम्। मनोवचनकायत्रयम्॥ २४५॥

टीका—क्षमादिदशलक्षणको धर्मः प्रथमपंक्तौ रचनीयः । तस्या अप्यधो द्वितीयपंक्तौ भूम्यंबुतेजोवायुवनस्पतिद्वीन्द्रियत्रीन्द्रियचतुःपञ्चेन्द्रिया अजीवकायश्च विन्यसनीयः । तस्या अप्यधस्तृतीयपंक्तौ श्रोत्रचक्षुर्घ्राणरसनस्पर्शनानि लेख्यानि । तस्या अप्यधश्चतुर्थपंक्तौ आहारभयपरिग्रहमैथुनसंज्ञा रचनीयाः । पञ्चमपंक्तावधस्तस्या न करोति न कारयति कुर्वन्तमन्यं नानुमोदते एतत्त्रयं स्थाप्यम् । तस्याप्यधः षष्ठपंक्तौ मनसा वाचा कायेनेति त्रयं विरचनीयम् । तत्र विकल्पानयने उच्चारणम् । क्षमयान्वितः पृथ्वीकायसमारंभं संवृतश्रोत्रेन्द्रियद्वारः आहारसंज्ञाविप्रयुक्तो न करोति मनसा । एवं पृथ्वीकायमपरित्यजन् दश विकल्पान् लभते । एवमप्कायसमारंभादिष्वपि दशसु दश विकल्पा लभ्यन्ते । ते दश दशकाः शतम् । एतच्छतं श्रोत्रेन्द्रियममुञ्चता लब्धम् । एवं चक्षुरादिभिरपि शतं शतं लभ्यते । जातानि पञ्च शतानि । एतान्याहारसंज्ञाममुञ्चता लब्धानि । तथा भयमैथुनपरिग्रहसंज्ञादिभिरपि प्रत्येकं पञ्च पञ्च शतानि लभ्यन्ते । जातं सहस्रद्वयम् । एतत्सहस्रद्वयं न करोमीत्यमुञ्चता लब्धम् । एवमितराभ्यामपि द्वे द्वे सहस्रे लब्धे । ततश्च षट् सहस्राणि जातानि । एतानि च मनसा लब्धानि । वाचापि षट् सहस्राणि । कायेनापि षडेव सहस्राणीति । एवमेषां शीलांगानां शीलकारणानामष्टादश सहस्राणि निष्पाद्यन्ते ॥ २४५ ॥

**शीलार्णवस्य पारं गत्वा संविग्नसुगमपारस्य । धर्मध्यानमुपगतो वैराग्यं प्राप्नुयाद्योग्यम् ॥ २४६ ॥**

टीका—शीलं मूलोत्तरगुणाः । शीलमर्णव इव दुरुत्तरत्वात् अनेकातिशयनिधानाद्वा । पारं गत्वा संपूर्णमवाप्य । कथं

---

अव०—संसारभीरुसुखप्राप्यपारस्य प्राप्तः विरक्तताया(क्ततताया)दूरानुयायिनं तत्कालावस्थायामुचितं प्रकृष्टम् ॥ २४६ ॥

संसारभीरवः सुखेनैव सकलशीलप्रापिणो भवन्ति । लब्ध्वा
पुनः केन वा पारं गम्यते ? संविग्नसुगमपारस्येति—संविग्नाः
च संपूर्णशीलं धर्मध्यानं प्राप्ताः । वैराग्यं प्राप्नुयाद्योग्यमिति । तत्कालावस्थायामुचितं प्रकृष्टवैराग्यमित्यर्थः ॥ २४६ ॥

तच्च धर्मध्यानं चतुर्भेदमाचक्षाण आह—

**आज्ञाविचयमपायविचयं च स ध्यानयोगमुपसृत्य । तस्माद्विपाकविचयमुपयाति संस्थानविचयं च २४७**

टीका—आज्ञाविचयमपायविचयं विपाकविचयं संस्थानविचयं च । स खलु चतुःप्रकारं धर्मध्यानं शीलार्णवपारगामी ।
आद्यध्यानद्वयमुपाश्रित्य संप्राप्य ततस्तृतीयं विपाकविचयमुपयाति । ततस्तुरीयं संस्थानविचयमन्वेति ॥ २४७ ॥

तत्राज्ञाविचयापायविचययोः स्वरूपनिरूपणायाह—

**आप्तवचनं प्रवचनं चाज्ञाविचयस्तदर्थनिर्णयनम् । आश्रवविकथागौरवपरीषहाद्येष्वपायस्तु ॥ २४८ ॥**

टीका—आप्तः क्षीणाशेषरागद्वेषमोहस्तस्य वचनं प्रवचनं अलीकादिशंकादिरहितं द्वादशांगमागमः । तस्याः खल्वा-
ज्ञायाः सर्वज्ञदत्ताया विचयो गवेषणं गुणवत्त्वेन निर्दोषत्वेन च । तस्यार्थः प्रवचनस्य निर्णयनं विनिश्चयः । सर्वाश्रवद्वार-
निरोधैकरसत्वाद्गुणयुक्तं । न कश्चिद्दोषोऽस्तीति । आज्ञाविचयोऽन्यामः सूत्रार्थनिपयः । आश्रवाः कायवाग्मनांसि ।

अव—धर्मध्यानस्य भेदचतुष्टयमाह—संबुद्धिसंपर्कगाप्य ॥ २४७ ॥ वीतरागवचनं चाज्ञायाः सर्वज्ञदत्तायाः गवेषणं तस्या अर्थ-
निश्चयः । एभिर्हेतुभिरैहलौकिकोऽपायः पारलौकिको नरकतिर्यग्गतिभ्रमणरूपो धर्मोऽगिना चिन्त्यते सोऽपायविचयः ॥ २४८ ॥

विकथा स्त्रीभक्तचौरजनपदविषयाः । गौरवमृद्धिसातरसाख्यं त्रिधा । परीषहाः क्षुत्पिपासादयः । आदिग्रहणादगुसत्वमसमितत्वं च । एतेषु वर्तमानस्य जन्तोरपायबहुत्वं नारकतिर्यक्त्वदेवमानुषजन्मसु प्रायेण प्रत्यवायाः संभवन्ति भूयांस इति पश्चार्धेन निरूपितमपायविचयं॥ २४८ ॥

तृतीयचतुर्थभेदयोर्निरूपणायाह–

**अशुभशुभकर्मपाकानुचिन्तनार्थो विपाकविचयः स्यात् । द्रव्यक्षेत्राकृत्यनुगमनं संस्थानविचयस्तु २४९**

टीका–अशुभं शुभं च कर्म द्वयोः कोऽद्यो(व्योः)वर्तते, तस्य पाको विपाकोऽनुभवो रस इत्यर्थः । तस्यानुचिन्तनं प्रयोजनमशुभानां कर्मांशानामयं विपाकः शुभानां चायमिति । संसारभाजां जीवानां तदन्वेषणं विपाकविचयः । द्रव्यक्षेत्राकृत्यनुगमवान् धर्मो द्रव्यमधर्मश्च तौ लोकपरिणामौ तयोः संस्थानं लोकाकाशस्यैव । तत्राधोमुखमल्लक इत्यादावुक्तम् । पुद्गलद्रव्यमनेकाकारमचित्तमहास्कन्धश्च सर्वलोकाकारः । जीवोऽप्यनेकाकारः शरीरादिभेदेन यावल्लोकाकारः समुद्घातकाले । कालोऽपि यदा क्रियामात्रं द्रव्यपर्यायः तदा द्रव्याकार एव । यदा तु स्वतंत्रं कालद्रव्यं तदैकसमयोऽर्धतृतीयद्वीपसमुद्राकृतिरित्येकसंस्थानविचयः ॥ २४९ ॥

---

अवर–अशुभकर्मणां द्व्यशीतिविधानां, शुभकर्मणां द्विचत्वारिंशद्भेदानां, विपाको रसः कटुकमधुरत्वादिस्तस्यानुचिन्तनार्थः, द्रव्याणां षण्णां, क्षेत्रमूर्ध्वाधस्तिर्यग्भेदं तेषामाकारानुचिन्तनमनुगमनं चिन्तनम् ॥ २४९ ॥

संप्रति पारंपर्येण धर्मध्यानस्य विशिष्टफलदर्शनायाह–

**जिनवरवचनगुणगणं संचिन्तयतो वधाद्यपायांश्च। कर्मविपाकान् विविधान् संस्थानविधीननेकांश्च २५०**

टीका–जिनानां वरास्तीर्थंकरास्तेषां वचनं तस्य(गुणा अहिंसकत्वादयस्तेषां) गणः समूहस्तम्। संचिन्तयतः सम्यगालोचयतः आज्ञागुणान्। वधाद्यपायांश्च द्वितीयभेदे तु चिन्तयतः वधबन्धनाभियोगासमाधिप्रभृतीन्। तृतीयभेदेन च कर्मणो विपाकान् विविधान् शुभानशुभांश्च। चतुर्थभेदे संस्थानविधीन् संस्थानप्रकारान् बहूनिति ॥ २५० ॥

* किं भवतीत्याह–

**नित्योद्विग्नस्यैवं क्षमाप्रधानस्य निरभिमानस्य। धुतमायाकलिमलनिर्मलस्य जितसर्वतृष्णस्य ॥२५१॥**

टीका–नित्यमित्यहर्निशमुद्विग्नो भीतः संसारात्। एवमुक्तेन प्रकारेण। क्षमाप्रधानस्य क्षमामूलत्वाद्धर्मस्य तत्प्रधानत्वम्। निर्गताभिमानस्य गर्वरहितस्येति। धुतमायाकलिमलनिर्मलस्य धुतो विक्षिप्तो मायैव कलिमलः कल्मषं पापं, तद्व्यपयतः। जितस्य(सर्व)लोभकषायस्य ॥ २५१ ॥

**तुल्यारण्यकुलाकुलविविक्तबन्धुजनशत्रुवर्गस्य। समवासीचन्दनकल्पनप्रदेहादिदेहस्य ॥ २५२ ॥**

---

अव२–नित्योद्विग्नस्य संसारोपरि नित्यमुद्वेगं कुर्वतः जितकोपाहंकारस्य, कलिमलं पापं, जितसर्वलोभस्य ॥ २५१ ॥ विविक्तौ पृथग्भूतौ बन्धुजनशत्रुवर्गौ यस्य, समस्तुल्यो वासीचन्दनाभ्यां कल्पनप्रदेहादिः च्छेदनानुलेपनादिः यस्य स तथैवंविधो देहो यस्य ॥२५२॥

टीका–तुल्यमरण्यं कुलाकुलश्च जनपदः सदृशः स्वात्मकार्यव्यग्रत्वात् । यादृगरण्यं तादृग् जनाकुलमपि । विविक्त-बन्धुजनशत्रुवर्गस्य बन्धुजनः स्वजनलोकः शत्रुवर्गो रिपुसमूहः तौ विविक्तौ यस्य पृथग्भूतात्मनः सकाशात् । यथा बन्धुवर्गस्तथा शत्रुवर्गः, मत्तोऽन्य एव बन्धुवर्गः शत्रुवर्गश्च विविक्तः, तत्र तुल्यचित्तवृत्तिः । यथा स्वजनवर्गस्तथा शत्रुवर्गोऽपीति । तथा समस्तुल्यः यो वास्या तक्ष्णोति यश्च चन्दनादिनोपलिंपति । कल्पनं तक्षणं, प्रदेह उपलेपनं चन्दनादिभिः । तत्र समवासीचन्दनकल्पनप्रदेहो ( ह्यादिर्यस्यैवंविधो देहो ) यस्य स एवमुक्तः ॥ २५२ ॥

**आत्मारामस्य सतः समतृणमणिमुक्तलोष्ठकनकस्य । स्वाध्यायध्यानपरायणस्य दृढमप्रमत्तस्य ॥ २५३ ॥**

टीका–आत्मन्येवारमति प्रीतिं करोति स्वकार्य एव व्याप्रियते, न बहिः प्रीतिं बध्नाति । समं तुल्यं तृणं दर्भादि मणयश्च पद्मरागादयः लोष्ठं काञ्चनं च मुक्तं येन नाभिलषितं । यथा लोष्ठः मृत्पिंडो नाभिलष्यते एवं कनकमपि । एतदुक्तं भवति–न मृत्पिंडः तृष्णास्पदं तथा कनकमपि यस्य स मुक्तलोष्ठकाञ्चनः । मुक्तं परित्यक्तम् । स्वाध्यायो वाचनादिपञ्चप्रकारः, ध्यानं धर्मादिस्तत्परायणस्तद्व्यग्रस्तदुपयोगः । दृढं बाढं सुष्ठु । अप्रमत्तस्य सकलप्रमादपरिहारिणः ॥ २५३ ॥

**अध्यवसायविशुद्धेः प्रमत्तयोगैर्विशुध्यमानस्य । चारित्रशुद्धिमग्र्यामवाप्य लेश्याविशुद्धिं च ॥ २५४ ॥**

---

अव०–कृतात्माभिरतेः स्वकार्य एव व्याप्रियते, न बहिः प्रीतिं विदधाति, दृढमप्रमत्तस्य ॥ २५३ ॥ चित्तनैर्मल्यात् प्रमाददंडयोगैर्विशुध्यमानस्य विमुच्यमानस्य अग्र्यां प्रधानभूताम् ॥ २५४ ॥

टीका—अध्यवसायविशुद्धिर्मनःपरिणामस्य निर्मलता । तस्याश्चाध्यवसायविशुद्धेर्हेतुभूतायाः । प्रमत्तयोगैर्विशुध्यमानस्य प्रमत्तस्य ये व्यापारा मनोवाक्कायविषयास्तैर्विशोधनशीलस्य विशुध्यमानस्येति । ततश्च चारित्रशुद्धिमग्र्यां प्रधानभूतामवाप्य लेश्याविशुद्धिं च तैजसीपद्मशुक्ललेश्यानामन्यतमलेश्यायाः प्रकृष्टां विशुद्धिं समाप्येति ॥ २५४ ॥

एताः सर्वाः पूर्वकालाः क्रियाः संप्रत्युत्तरक्रियानिर्देशार्थमाह—

**तस्यापूर्वं करणमथघातिकर्मक्षयैकदेशोत्थम् । ऋद्धिप्रवेकविभववदुपजातं जातभद्रस्य ॥ २५५ ॥**

टीका—यदेतदुक्तमेतदन्तेऽपूर्वकरणमुपजातमप्राप्तपूर्वं घातिकर्माणि ज्ञानावरणदर्शनावरणमोहान्तरायाख्यानि तेषामेकदेशक्षयः, कस्यचित्सर्वक्षयः । तस्माद्भूतमाविर्भूतम् । ऋद्धिप्रवेकाः ऋद्धिप्रकराः तेषां विभवः प्राचुर्यं ते यत्र विद्यन्ते तत्र ऋद्धिप्रवेकविभववत् । भद्रं कल्याणं ऋद्धिप्रकारास्तस्यामवस्थायामुपजायन्ते वियद्गमनवैक्रियाणिमादिकाः । जातं भद्रं कल्याणमस्येति । तस्य जातभद्रस्य ॥ २५५ ॥

**सातर्द्धिरसेष्वगुरुः संप्राप्य विभूतिमसुलभामन्यैः।सक्तः प्रशमरतिसुखे न भजति तस्यां मुनिः संगम्२५६**

---

अव०—प्राक्तनकर्मक्षयकरणदक्षं, अथानन्तरं घातिकर्मणां चतुर्णां क्षयैकदेशोऽसमस्तक्षयस्तदुत्थं, ऋद्धय आमर्षौषध्यादयः, प्रवेका अवधिज्ञानादिविशेषाः, विभवास्तृणाग्रादपि कनकवृष्टिकर्तृत्वादयः ते विद्यन्ते यत्र तत्तथा, जातं भद्रं कल्याणमस्य तस्य ॥ २५५ ॥ सुखविभूतिरसामृतकल्पाहारेषु अगुरुर्गौरवरहितः अकृतादर इत्यर्थः । लब्धिमाकाशगमनादिकां दुष्प्रापां कापुरुषैः, तस्यामामर्षौषध्यादिविभूतौ प्राप्तायामपि ॥ २५६ ॥

टीका–साते रूपौ रसे च अगुरुः अकृतादरः । संप्राप्य विभूतिमाकाशगमनादिकाम् । अन्यैरसुलभामप्राप्तां । तादृक्चारित्रैः सक्तोऽभिरतः प्रशमरतिसुखे । न भजति न करोति । तस्यां विभूतौ मुनिः संगं स्नेहं नोपजीवति लब्धीरित्यर्थः ॥२५६॥

सर्वर्द्ध्यतिशायिनां यतीनामृद्धिर्भवति परमातिशयप्राप्तत्वादिति दर्शयति–

**या सर्वसुरवरर्द्धिर्विस्मयनीयापि सानगारर्द्धेः । नार्घति सहस्रभागं कोटिशतसहस्रगुणितापि ॥२५७॥**

टीका–सर्वसुराणां ये वराः प्रधानभूताः कल्पाधिपतय इन्द्राः शक्रादयः कल्पातीताश्च । तेषामृद्धिर्विभूतिर्या सा विस्मयकारिणी भवति प्राणिनाम् । अतो विस्मयनीयापि सती सा विभूतिरनगारर्द्धेः साधुजनसमृद्धेर्नार्घति सहस्रभागम् । कोटिशतसहस्रगुणितापि सा सुरवरर्द्धिः कोटिलक्षगुणितापि नार्घति । सहस्रांशेनाप्यनगारर्द्धेर्न तुल्यतामेतीत्यर्थः ॥२५७॥

**तज्जयमवाप्य जितविघ्नरिपुर्भवशतसहस्रदुष्प्रापम् । चारित्रमथाख्यातं संप्राप्तस्तीर्थकृत्तुल्यम् ॥२५८॥**

टीका–तस्या जयस्तज्जयस्तमवाप्य । तज्जयं विभूतेरनुपजीवनम् । उत्पन्नानामपि लब्धीनां साधवो न परिभोगान् विदधते । जिता निराकृता विघ्नप्रधाना रिपवः कषायाः क्रोधादयो भवशतसहस्रैर्जन्मलक्षाभिरपि दुष्प्रापं दुर्लभं चारित्रमथाख्यातं यथाख्यातमेवाख्यातं संप्राप्तस्तीर्थकृत्तुल्यं, यथा तीर्थकरस्तत्स्थानं प्राप्तस्तथासावपि भवतीति विशिष्टेनोपमा क्रियते ॥ २५८ ॥

---

अव०–सर्वसुखर्द्धिश्चतुर्विधेन्द्रविभूतिः ॥ २५७ ॥ तज्जयं तपोऽनुष्ठानजन्यातुल्यविभूतिबन्धाभिभवं, यथा तीर्थकरस्तत्स्थानकं प्राप्तस्तथाऽसावपि भवति ॥ २५८ ॥

**शुक्लध्यानाद्यद्वयमवाप्य कर्माष्टकप्रणेतारम्। संसारमूलबीजं मूलादुन्मूलयति मोहम् ॥ २५९ ॥**

टीका–शुक्लध्यानस्याद्यद्वयमवाप्य पृथक्त्ववितर्कसविचारमेकत्ववितर्कमविचारं च । किं करोति ? मोहमुन्मूलयति । कीदृशं मोहं ? कर्माष्टकस्य प्रणेतारं नायकम् । संसारतरोर्मूलमाद्यं प्रथमं बीजम् । समूलकाषं कषत्युन्मूलयतीति ॥२५९॥

अथ केन प्रकारेण मोहोन्मूलनमित्याह–

**पूर्वं करोत्यनन्तानुबन्धिनाम्नां क्षयं कषायाणाम्। मिथ्यात्वमोहगहनं क्षपयति सम्यक्त्वमिथ्यात्वम् २६०**

टीका–अनन्तानुबन्धिनः क्रोधमानमायालोभास्तान् प्रथमं क्षपयति । कीदृशं तत् । मोहगहनं मोहो गहनो घनो यस्मिन्मिथ्यात्वे तन्मोहगहनम् । ततः सम्यग्मिथ्यात्वं क्षपयति ॥ २६० ॥

**सम्यक्त्वमोहनीयं क्षपयत्यष्टावतः कषायांश्च। क्षपयति ततो नपुंसकवेदं स्त्रीवेदमथ तस्मात् ॥२६१॥**

टीका–ततः सम्यक्त्वं क्षपयति । ततोऽप्रत्याख्यानकषायचतुष्कम् प्रत्याख्यानावरणकषायचतुष्कं च क्षपयति । ततो नपुंसकवेदं । पश्चात्स्त्रीवेदं पुरुषः क्षपकश्रेणिमारोहन् । यदा स्त्री समारोहति तदा स्त्रीवेदं पश्चात्क्षपयति । अथ नपुंसक आरोहति ततो नपुंसकवेदं पश्चात्क्षपयति ॥ २६१ ॥

---

अव०–पृथक्त्ववितर्कसविचारं १ एकत्ववितर्कमविचारं २ कर्माष्टकमध्ये स्वामिनम् ॥ २५९ ॥ अथ क्षपकश्रेणिमारोहन् मोहमुन्मूलयन् प्रथमं अनन्तानुबन्धिनां यावज्जीवावस्थायिकषायाणां, ततो मिथ्यात्वमोह एव गहनं, ततोऽपि मिश्रं सम्यक्त्वं च मिथ्यात्वं च सम्यग्मिथ्यात्वं, एतावता मिश्रम् ॥ २६० ॥ सम्यक्त्वं क्षायोपशमिकपुञ्जरूपं, ततो द्वितीयतृतीयकषायान् ॥ २६१ ॥

**हास्यादि ततः षट्कं क्षपयति तस्माच्च पुरुषवेदमपि । संज्वलनानपि हत्वा प्राप्नोत्यथ वीतरागत्वम् ॥२६२॥**

टीका–हास्यं रतिररतिर्भयं शोको जुगुप्सा चेति षट्कम् । ततः पुरुषवेदं क्षपयति । संज्वलनानपि क्षपयित्वा वीतरागत्वमवाप्नोति । उन्मूलितेऽष्टाविंशतिविधे मोहे वीतरागो भवतीति ॥ २६२ ॥

**सर्वोद्घातितमोहो निहतक्लेशो यथा हि सर्वज्ञः । भात्यनुपलक्ष्यराह्वंशोन्मुक्तः पूर्णचन्द्र इव ॥२६३॥**

टीका–सर्वः सकल उद्घातितो ध्वस्तो मोहो येन स सर्वोद्घातितमोहः । निहताः क्लेशा येनासौ तथोक्तः । क्लेशयन्तीति क्लेशाः क्रोधादय एव दुर्दमत्वात्पृथगुपात्ताः । यथा हि सर्वज्ञो ह्युत्पन्नकेवलज्ञानो भवति । स तु क्षपितसकलमोहः सर्वज्ञवद्भाति शोभते । अनुपलक्ष्यराह्वंशोन्मुक्तः अनुपलक्ष्यो राह्वंशो मुखादिविभागस्तेन मुक्तः पूर्णचन्द्र इव । अतिसंक्षेपेणोक्ता क्षपकश्रेणी प्रकरणकारेण, प्रदर्शनमात्रत्वात् । अधुना विशेषेणोच्यते–अनन्तानुबन्धिनश्चतुरः कषायान् युगपत्क्षपयति । तेषामनन्तभागं शेषं मिथ्यात्वे प्रक्षिप्य मिथ्यात्वं क्षपयति । मिथ्यात्वादेरपि शेषं सम्यग्मिथ्यात्वे प्रक्षिप्य सम्यग्मिथ्यात्वं क्षपयति । तच्छेषं सम्यक्त्वे प्रक्षिप्य सम्यक्त्वमपि क्षपयति । यदि च बद्धायुष्कस्ततः क्षीणसप्तके तत्रैव अवतिष्ठति नोपर्यारोहति । अबद्धायुष्कस्तु अविश्रान्त्या अविच्छेदेन सकलां श्रेणिमध्यारोहति । ततोऽष्टौ कषायान्

अव०–हास्यरतीत्यादि उन्मूलनेऽ(लिते)ष्टाविंशतिविधेऽपि मोहे वीतरागो भवति ॥ २६२ ॥ सकल उद्घातितो ध्वस्तो मोहो येन सः, अनुपलक्ष्यो नाद्यापि स्वविषयां प्रतीतिमुत्पादयितुं प्रत्यलः, यथा राहुणा पूर्णचन्द्रो मुक्तोऽपि कियन्तं कालमनुपलक्ष्यो भवति, तथा क्षीणमोह इति ॥ २६३ ॥

क्षपयति । सर्वत्र च सावशेषे पूर्वके पुरस्ताद्गच्छति । अष्टानां च कषायाणां संख्येयभागं क्षपयन् विमध्यभागे नामकर्मण इमाः प्रकृतीस्त्रयोदश क्षपयति—नरकतिर्यग्गती द्वे, एकद्वित्रिचतुरिन्द्रियजातयश्चतस्रः, नरकतिर्यग्गत्यानुपूर्व्यौ द्वे, अप्रशस्तविहायोगतिः, स्थावरसूक्ष्मापर्याप्तकसाधारणशरीरनामानि चत्वारि। दर्शनावरणीयकर्मणश्च तिस्रः प्रकृतीः क्षपयतीमाः—निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्ध्याख्याः । ततो यदवशेषमष्टानां तत्क्षपयति । कषायाणामप्रत्याख्यानप्रत्याख्यानावरणानाम् । ततो नपुंसकवेदं स्त्रीवेदं च । ततो हास्यरत्यरतिभयशोकजुगुप्साः क्षयं नयति । ततः पुरुषवेदं त्रिधा कृत्वा युगपद्भागद्वयं क्षपयित्वा तृतीयभागं संज्वलनक्रोधे प्रक्षिप्य, क्रोधमपि त्रिधा कृत्वा युगपद्भागद्वयं क्षपयित्वा तृतीयभागं संज्वलनमाने प्रक्षिप्य, संज्वलनमानमपि त्रिधा कृत्वा युगपद्भागद्वयं क्षपयित्वा तृतीयभागं (संज्वलनमायायां तां च त्रिधा कृत्वा भागद्वयं युगपत्क्षपयित्वा तृतीयं) संज्वलनलोभे प्रक्षिप्य, त्रिधा कृत्वा युगपद्भागद्वयं क्षपयित्वा पश्चात्तृतीयभागं संख्येयानि खण्डानि करोति । तानि क्षपयन् बादराणि खंडानि बादरसंपराय उच्यते । तत्र च यच्चरमं संख्येयतमं खण्डं, तदसंख्येयानि खण्डानि करोति । तानि क्रमेण क्षपयन् सूक्ष्मसंपराय उच्यते। तेष्वपि निःशेषतः क्षपितेषु निर्ग्रन्थो भवति । मोहसागरादुत्तीर्णः । तीर्त्वा च मोहमहासमुद्रं मुहूर्तमात्रं विश्राम्यति । अगाधसमुद्रोत्तीर्णलब्धगाधपुरुषवत् । विश्राम्य च समयद्वये शेषे मुहूर्तस्य । तत्र तयोर्द्वयोः समययोः प्रथमे समये निद्रां प्रचलां च दर्शनावरणप्रकृती द्वे क्षपयति । चरमसमये ज्ञानावरणं पञ्चप्रकारं, दर्शनावरणं चतुर्विधं, अन्तरायं पञ्चविधं युगपत्क्षपयित्वा केवलज्ञानं प्राप्नोति । एवं द्वाविंशत्युत्तरशतमध्ये षष्ट्या प्रकृतिभिः क्षपिताभिः केवललाभो भवति ॥ २६२ ॥

तस्यां च क्षपकश्रेण्यां वर्तमानस्य कावस्था जायत इत्याह—

**सर्वेन्धनैकराशीकृतसंदीप्तो ह्यनन्तगुणतेजाः । ध्यानानलस्तपःप्रशमसंवरहविर्विवृद्धबलः ॥ २६४ ॥**

टीका—सर्वेन्धनानां पुञ्जीकृतानामेकराशीकृतः संदीप्त इन्धनराशिर्दत्ताग्निर्लागिताग्निर्यथा दहति, एवमनन्तगुणतेजा ज्ञा(ध्या)नानलः । तपो द्वादशभेदं, प्रशमः कषायजयः संवर आश्रवनिरोधः, तपःप्रशमसंवरा एव हविर्घृतं तत्प्रक्षेपात् विशेषेण वृद्धं बलं शक्तिर्यस्य ज्ञा(ध्या)नानलस्येति ॥ २६४ ॥

स खलु ज्ञा(ध्या)नानलः किं करोतीत्याह—

**क्षपकश्रेणिमुपगतः स समर्थः सर्वकर्मिणां कर्म । क्षपयितुमेको यदि कर्मसंक्रमः स्यात्परकृतस्य ॥२६५॥**

टीका—क्षपकश्रेणिमनुप्राप्तः परिदहन् कर्माणि ज्ञा(ध्या)नानलः स समर्थः शक्तः । सर्वकर्मिणां सर्वेषां संसारिणां कर्मवतां कर्मभाजां यत्कर्म । तेषु व्यवस्थितं पुञ्जीकृतं तत्क्षपयितुमेकोऽसहायः । यदि कर्मणः परकृतस्य तस्य तस्मिन् क्षपकश्रेणिस्थे संक्रमः स्यात् । स तु नास्ति । तस्मात्सामर्थ्यमात्रमिदं तस्य वर्ण्यते ज्ञा(ध्या)नानलस्य ॥ २६५ ॥

---

अव०—यथा ज्वालिताग्निः काष्ठादिः, एवं ध्यानाग्निः । अनन्तगुणं तेजो यस्य । तपोऽनशनादि । त एव हविर्घृतम् ॥ २६४ ॥ अनुप्राप्तः परिगतः, जीवानां सर्वेषां कर्मभाजां दहेत्, यदि संक्रमः स्यात् ॥ २६५ ॥

एतदेव स्पष्टयन्नाह–

**परकृतकर्मणि यस्मान्न क्रामति संक्रमो विभागो वा। तस्मात्सत्त्वानां कर्म यस्य यत्तेन तद्वेद्यम्॥ २६६॥**

टीका–परेण कृतं कर्म तस्मिन् परकृतकर्मणि विषये। यस्मान्नास्ति संक्रमः। अन्येन यत्कर्म(कृतमस्तीति)तदन्यत्र न क्रामति न संक्रान्तिर्भवति। सर्वस्य कर्मणः संक्रमो मा भूदेकस्य भविष्यतीति नेत्याह–विभागो वा। नोऽप्येकदेशो विभागः संक्रामतीत्यर्थः कृतनाशाकृताभ्यागमप्रसंगात्। तस्मात्सत्त्वानां प्राणिनां यस्य यत्कर्म प्राणिनस्तेनैव तद्वेद्यमनुभवनीयमिति। अथवा न क्रामति न क्रमते, न भवति संक्रान्तिरिति॥ २६६॥

मोहनीयकर्मक्षयाच्छेषकर्मक्षयोऽवश्यंभावीति दर्शयति–

**मस्तकसूचिविनाशात्तालस्य यथा ध्रुवो भवति नाशः। तद्वत्कर्मविनाशो हि मोहनीयक्षये नित्यम्॥२६७॥**

टीका–तालतरोः शिरसि सूचिर्या प्ररोहति। तद्विनाशे च तालतरोरवश्यंभावी ध्रुवो नाशः। तद्वत्तथा शेषकर्मणां विनाशः क्षयोऽष्टाविंशतिविधमोहनीयक्षये ध्रुवो नित्य इत्यर्थः॥ २६७॥

**छद्मस्थवीतरागः कालं सोऽन्तर्मुहूर्तमथ भूत्वा। युगपद्विविधावरणान्तरायकर्मक्षयमवाप्य॥ २६८॥**

---

अव०–संक्रमः सामस्त्येन कर्मप्रवेशः, अथ विभाग एकदेशोऽपि नाक्रामति॥ २६६॥ शिरउद्गताया नाशात्क्षयात् वृक्षस्य ध्रुवो निश्चयेन भवति॥ २६७॥ क्षपितकषायत्वात्, अन्तर्मुहूर्तकालं यावद्भूत्वा स्थित्वा, युगपदेककालं ज्ञानावरण ५ दर्शनावरण ४ अन्तरायाणां ५ क्षयमाप्य॥ २६८॥

टीका–छद्म चावरणं तत्र स्थितः छद्मस्थः, वीतरागश्च क्षपितकषायत्वात्। अन्तर्मुहूर्तं घटिकाद्वयाभ्यन्तरकालं वीतरागो भूत्वा। युगपत्समकमेव। विविधं ज्ञानावरणं मतिज्ञानादिभेदं, । दर्शनावरणं चतुर्विधं। विविधमित्यनेकरूपम्। तथान्तरायं दानान्तरायादिप्रकारं। इत्थं कर्मक्षयमवाप्य ॥ २६८ ॥

किं प्राप्तवानित्याह—

**शाश्वतमनन्तमनतिशयमनुपममनुत्तरं निरवशेषम्। संपूर्णमप्रतिहतं संप्राप्तः केवलज्ञानम् ॥ २६९ ॥**

टीका–शाश्वतं लब्धात्मलाभं । सर्वकालभावित्वमेव भावयति–अनन्तमपर्यवसानम् । अविद्यमानातिशयं महातिशयं, न ततः परमतिशयोऽस्ति, न तत्केनचिदतिशय्यत इत्यर्थः । अविद्यमानोपममनुपमं, तत्सदृशस्याभावात् । अविद्यमानमुत्तरं ज्ञानं यस्य तदनुत्तरम्। निरवशेषमात्मनः स्वरूपं संपूर्णं, सकलज्ञेयग्राहित्वात् । अविद्यमानमप्रतिघातमप्रतिहतं सर्वतः पृथ्वीसमुद्रादावपि न प्रतिहन्यते। संप्राप्तः प्राप्तवानेवंविधं केवलज्ञानम् ॥ २६९ ॥

**कात्स्न्याल्लोकालोके व्यतीतसांप्रतभविष्यतः कालान्। द्रव्यगुणपर्यायाणां ज्ञाता द्रष्टा च सर्वार्थैः॥२७०॥**

---

अव०–शाश्वतमनवरतभवनशीलत्वात्, अनन्तं क्षयाभावात्, केनापि तस्यातिशयितुमशक्यत्वात्, अनुपममपगतोपमानत्वात्, अनुत्तरमविद्यमानोत्तरत्वात् निरवशेषं परिपूर्णत्वेनोत्पत्तेः, संपूर्णं सकलज्ञेयग्राहित्वात्, अप्रतिहतं सदापि प्रतिघातकाभावात् ॥ २६९ ॥ कार्त्स्न्येन परिपूर्णे लोकालोके कृत्स्नवस्तुपरिच्छेदित्वात्, गुणपर्यायवद्द्रव्यं, सहभाविनो गुणाः, क्रमभाविनः पर्यायाः सर्वार्थैः सर्वप्रकारैः ॥२७०॥

टीका—लोकेऽलोके च कृत्स्नवस्तुग्राहित्वात् । कृत्स्नं सकलं तद्भावः कात्स्न्यं तस्मात्कात्स्न्यात्, सकलवस्तुपरिछेदित्वात् । व्यतीतोऽतिक्रान्तः । सांप्रतो वर्तमानः । भविष्यन्नागामी । एतान् कालान् द्रव्यगुणपर्यायाणां द्रव्याणां गुणानां पर्यायाणां च संबन्धिनः कालानुत्पत्तिस्थितिविनाशाख्यान्न द्रव्यादिव्यतिरिक्तकालोऽस्तीत्यमुं पक्षमाश्रित्य ज्ञानपरिज्ञानशीलः दर्शनशीलश्च । तत्र कालो लोक एव कियत्यपि अन्यत्र नास्ति । सर्वार्थैरिति सर्वप्रकारैः ज्ञाता द्रष्टा च । यत्र तु नास्ति कालद्रव्यं तत्र द्रव्यगुणपर्यायाणामेव द्रष्टा ज्ञाता च सर्वाकारैरिति । अथवा लोके च ये द्रव्यगुणपर्यायास्तेषां व्यतीतसांप्रतभविष्यतः कालान् कात्स्न्येन ज्ञाता द्रष्टा च सर्वाकारैरिति ॥ २७० ॥

**क्षीणचतुःकर्मांशो वेद्यायुर्नामगोत्रवेदयिता । विहरति मुहूर्तकालं देशोनां पूर्वकोटिं वा ॥ २७१ ॥**

टीका—क्षीणाश्चतुर्णां कर्मणामंशा भागा यस्य स क्षीणचतुःकर्मांशः क्षपितमोहज्ञानदर्शमान्तरायकर्मचतुष्टयः । वेदनीयायुष्कनामगोत्रवेदयितेति वेदनीयादीनां चतुर्णां भवधारणीयानां कर्मणामनुभविता । विहरति पर्यटति । मुहूर्तकालं घटिकाद्वयं लब्धकेवलज्ञानः सन् विहरति भव्यसत्वान् प्रतिबोधयन् । अथवा देशोनां पूर्वकोटिं विहरति । देशोऽष्टौ वर्षाणि । तदूनाम् । पूर्वकोट्यायुष्को यः पुरुषः सोऽष्टासु वर्षेष्वतीतेषु प्रव्रजितः । प्रतिपन्नचारित्रस्य च केवलं केवलज्ञानमुदपादीति ॥ २७१ ॥

---

अव०—क्षीणघातिकर्मचतुष्कः भवोपग्राहिकर्मचतुष्कः वेदिता जघन्येन घटिकाद्वयम् ॥ २७१ ॥

**तेनाभिन्नं चरमभवायुर्दुर्भेदमनपवर्तित्वात् । तदुपग्रहं च वेद्यं तत्तुल्ये नामगोत्रे च ॥ २७२ ॥**

टीका—तेनायुषा अभिन्नं सदृशमित्यर्थः । चरमे भवे पश्चिमे भवे आयुः पर्यन्तजन्मनि दुर्भेदमित्यभेद्यमेव अध्यवसायनिमित्तादिभिः सप्तभिः कारणैः कस्मादनपवर्तित्वात् चरमभवायुषोऽपवर्तनं नास्ति । ततश्च तस्यायुषो यत्प्रमाणं यावती स्थितिः तावत्स्थितिकानि वेद्यनामगोत्राणि तैरभिन्नं सदृशमायुरिति । अथवा न तेनायुषा सह भिन्नं वेद्यादित्रयं सदृशमेवेत्यर्थः । तेन चायुषा उपगृहीतं वेद्यं नामगोत्रे च सत्यायुषि तेषां संभवादिति ॥ २७२ ॥

**यस्य पुनः केवलिनः कर्म भवत्यायुषोऽतिरिक्ततरम् । स समुद्घातं भगवानथ गच्छति तत्समीकर्तुम् ॥ २७३ ॥**

टीका—यस्य केवलिनश्चरमायुष्कात् । कर्म वेद्यनामगोत्राख्यम् । अतिरिक्तं अधिकं भवति । स केवली वेद्यादित्रयमायुषा सह समीकर्तुं तत्तुल्यतामेतुं समुद्घातं याति । गत्वा च यावत्प्रमाणमायुस्तावत्प्रमाणानि वेद्यनामगोत्राणि विदधाति । सम्यगुत्कृष्टं हननं गमनं समुद्घातः । नातः परं गमनमस्ति । लोकाद्बहिर्गमनाभावात् ॥ २७३ ॥

तस्य चायं विधिरुच्यते—

**दण्डं प्रथमे समये कपाटमथ चोत्तरे तथा समये । मन्थानमथ तृतीये लोकव्यापी चतुर्थे तु ॥ २७४ ॥**

---

अव०—तेनायुषाऽभिन्नं सदृशं क्षीरोदकवत् संस्थितचरमभवयोग्यमायुः केवलिना दुर्भेदमनपवर्तनीयत्वात्, तथा वेदनीयं कर्म, तदुपग्रहं तेनायुषोपगृह्यते उपष्टभ्यते तदुपग्रहमनपवर्तनीयत्वात्, आयुःकर्मणा सह वेद्यत्वात् ॥ २७२ ॥ अधिकतरम् ॥ २७३ ॥ दंडमूर्ध्वाधश्चतुर्दशरज्ज्वात्मकं बाहल्यतः शरीरमानं कपाटं पूर्वापरलोकान्तव्यापिनं समस्तनिष्कूटव्यापनाल्लोकव्यापी ॥ २७४ ॥

टीका—स्वशरीरप्रमाणदण्डवाहुल्येनोर्ध्वमधश्चात्मप्रदेशान् विक्षिपत्यालोकान्तात् । तत्र प्रथमसमये दण्डं । द्वितीयसमये तु कपाटीकरोति दक्षिणोत्तरतो विस्तारयत्यालोकान्तात् । एवं तृतीयसमये तदेव कपाटं मन्थानं करोति पूर्वोत्तरयोर्विस्तारयत्यालोकान्तात् । एवं चतुर्थसमये मन्थानान्तराणि पूरयित्वा चतुर्थे तु लोकव्यापी भवति । एवमात्मप्रदेशेषु निरावरणेन वीर्येण विरलितेषु कर्म वेद्यादित्रयमायुषा समं करोति । आयुष्कं तु नापवर्तते । अनपवर्तित्वादेवेत्युक्तम् आत्मप्रदेशविस्तारणाच्च तद्वेद्यादिकर्म अतिरिक्तं क्षयं गच्छदायुषा सह समीकरोति ॥ २७४ ॥

**संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुनः षष्ठे । सप्तमके तु कपाटं संहरति ततोऽष्टमे दण्डम् ॥ २७५ ॥**

टीका—एवं चतुर्भिः समयैर्लोकं क्रमेण व्याप्य चतुर्भिरेव समयैर्विपरीतं संहरति । पञ्चमे समये मन्थानान्तराण्युपसंहरति । षष्ठे समये मन्थानं संहरति । सप्तमे समये कपाटम् । अष्टमे समये दण्डमुपसंहृत्य शरीरस्थ एव भवति ॥२७५॥

अथ कस्मिन्समये को योगः समुद्घातकाले भवतीत्याह—

**औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः । मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ २७६ ॥**

टीका—प्रथमेऽष्टमे च समये औदारिक एव योगो भवति शरीरस्थत्वात् । कपाटोपसंहरणे सप्तमः । मन्थसंहरणे षष्ठः ।

---

अव०—अन्तराणि निष्कूटगतजीवप्रदेशान् ॥ २७५ ॥ औदारिकशरीरयापकः प्रथमाष्टमसमययोर्दंडकरणसंहारलक्षणयोः कथितोऽसौ केवली ॥ २७६ ॥

कपाटकरणे द्वितीयः । एतेषु त्रिष्वपि समयेषु कार्मणव्यतिमिश्र औदारिकयोगो भवति । "कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च । समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात् ॥ १[1]॥" मन्थान्तरपूरणसमयश्चतुर्थः । मन्थान्तरसंहरणसमयः पञ्चमः । मन्थानकरणसमयस्तृतीयः । समयत्रयेऽप्यस्मिन् कार्मणशरीरयोगः । तत्र च नियमेनैव जीवो भवत्यनाहारकः ॥ २७६ ॥

**स समुद्घातनिवृत्तोऽथ मनोवाक्काययोगवान् भगवान् । यतियोग्ययोगयोक्ता योगनिरोधं मुनिरुपैति ॥२७७॥**

टीका—स खलु केवली समीकृतचतुष्कर्मा । ततः समुद्घातान्निवृत्तः । तदनन्तरं मनोवाक्काययोगी भगवान् योगत्रयवर्तीति । अथ मनोयोगः केवलिनः कुत इत्युच्यते—यदि नामानुत्तरो मनसा तत्रस्थ एव पृच्छेत्, अन्यो वा देवो मनुष्यो वा, ततो भगवान् मनोद्रव्याण्यादाय मनःपर्याप्तिकरणेन तत्प्रश्नव्याकरणं करोति सत्यमनोयोगेन । असत्यामृषामनोयोगेन व्याकरोति । तथा वाग्योगोऽपि भगवतः सत्यः असत्यामृषारूपो वा । काययोगस्त्वौदारिकादिगमनादिक्रियासाधनः । यतियोग्ययोगयोक्तेत्यनेनैतत्प्रतिपादितं । तस्यामवस्थायां स यतिः केवली योग्यमुचितं योगं सत्यरूपं असत्यमृषारूपं वा युंक्ते ॥ २७७ ॥

---

अव०—स केवली करणत्रयशुद्धयोगवान् उचितं सत्यं यतियोग्यं योगं व्यापारं युंक्ते प्रवर्तयति, संयोगो मोक्षं न गच्छतीति योगनिरोधमुपैति प्राप्नोति ॥ २७७ ॥

१ भविष्यतीयं कारिका मूलभूतान्यत्र साक्षितयास्या न्यासदर्शनात्संबंधयोगाद्याख्यानाच्चात्रेति ।

संप्रति तान् योगान्निरोद्धुमिच्छन्नमुना प्रकारेण निरुणद्धि—

**पञ्चेन्द्रियोऽथ संज्ञी यः पर्याप्तो जघन्ययोगी स्यात्। निरुणद्धि मनोयोगं ततोऽप्यसंख्यातगुणहीनम्॥२७८॥**

टीका—सयोगस्य सिद्धिर्नास्तीति योगोऽवश्यं निरोद्धव्यः। तत्र प्रथमं मनोयोगमापेद्य (क्षेप)कं निरुणद्धि। मनःपर्याप्त्याख्यं करणं शरीरप्रतिबद्धं, येन मनोद्रव्यग्रहणं करोति। तद्वियोजनार्थमनन्तवीर्यः सन् मनोविषयं निरुन्धन् निरुणद्धि। पूर्वं पञ्चेन्द्रियस्य संज्ञिनः मनःपर्याप्तिकरणयुक्तस्य प्रथमसमयपर्याप्तकस्य जघन्ययोगस्य मनोद्रव्यवर्गणास्थानानि निरुणद्धि स्वात्मनि। ततोऽपि तद्ग्रहणहान्या असंख्येयगुणान्यवस्थानानि निरुणद्धि। पश्चादमनस्को भवति मनःपर्याप्तिरहित इत्यर्थः॥ २७८॥

ततो वाग्योगं निरुणद्धि। तन्निरूपणायाह—

**द्वीन्द्रियसाधारणयोर्वागुच्छ्वासावधो जयति तद्वत्। पनकस्य काययोगं जघन्यपर्याप्तकस्याधः॥२७९॥**

---

अव०—तत्र प्रथमं मनोयोगं मनःपर्याप्तिजनितव्यापारं शरीरप्रतिबद्धं मनोद्रव्यग्राहकं, तद्वियोजनार्थं पञ्चेन्द्रियस्य संज्ञिनो मनःपर्याप्त्या प्रथमसमयपर्याप्तकस्य यः सर्वजघन्यमनोयोगो मनोवर्गणाग्रहणशक्तेर्व्यापारः तस्मात्स्वात्मनि असंख्येयगुणहान्या प्रतिसमयं निरुन्धन् सकलं निरुणद्धि, मनःपर्याप्त्या रहितो भवति ॥ २७८ ॥ द्वीन्द्रियः कपर्दिकादिजीवः साधारणः सूक्ष्मनिगोदादिस्तयोः क्रमेण वाक्पर्याप्तिकायपर्याप्तिभ्यां प्रथमसमयपर्याप्तकयोर्जघन्ययोगौ क्रमेण वागुच्छ्वासरूपौ ताभ्यामसंख्येयगुणहीनौ निरुणद्धि। सूक्ष्मकाययोगनिरोधे तु पनक उल्लिजीवस्तस्मादधोऽसंख्यगुणहीनः पर्याप्तिद्वयरहितो भवति ॥ २७९ ॥

टीका—द्वीन्द्रियस्य प्रथमसमयपर्याप्तकस्य वाक्पर्याप्तिकरणं यत्तद्विघटयति । तस्य जघन्यवाग्योगो यः साधारणजीवस्य च प्रथमसमयपर्याप्तकस्य यदुच्छ्वासनिःश्वासपर्याप्तिकरणं ताभ्यां वागुच्छ्वासौ अधः कृत्वा तावन्निरुणद्ध्यसंख्येयगुणहान्या, यावत्समस्तवाग्योगो निरुद्धः उच्छ्वासनिःश्वासपर्याप्तिकरणं च । तद्वदिति यथा मनो निरुणद्धि तद्वद्वागुच्छ्वासावपि निरुणद्धीत्यर्थः । तत्र मनोवाचोर्निरुद्धयोः काययोगनिरोधं करोति । पनक उद्भिजीवस्तस्य प्रथमसमयपर्याप्तकस्य यः काययोगो जघन्यस्ततोऽप्यधोऽसंख्येयगुणहान्या निरावरणवीर्यत्वात्सकलं काययोगं निरुणद्धि ॥ २७९ ॥

काययोगनिरोधकाले च—

**सूक्ष्मक्रियमप्रतिपाति काययोगोपयोगतो ध्यात्वा । विगतक्रियमनिवर्तित्वमुत्तरं ध्यायति परेण ॥२८०॥**

टीका—ध्यानं सूक्ष्मक्रियमप्रतिपाति सूक्ष्मकाययोगस्थित एव ध्यायति । तदैव च शैलेशीं त्रिभागहीनमात्मप्रदेशराशिः करोति । किमर्थमिति वेद्यानि शरीरे निर्वर्तितानि मुखश्रवणनासिकादिछिद्राणि तत्परिपूरणार्थं घनीकरोति आत्मानं त्रिभागहीनावगाहसंस्थानपरिणाहं करोतीत्यर्थः । ततश्चतुर्थशुक्लध्यानभेदं परेण ध्यायति । विगतक्रियमनिवर्तिध्यानं निरुद्धयोगः व्युपरतसकलक्रियमनिवर्तिध्यानमुत्तरध्यानं ( ध्यायन् ) चरमकर्मांशं क्षपयति ॥ २८० ॥

---

अव०—सूक्ष्मकाययोगनिरोधकाले तृतीयशुक्लध्यानी भवति इति तन्निरूपयन्नाह—सूक्ष्मक्रियमप्रतिपातिकं ध्यायति । तदैव च शैलेशीं करोति स्वदेहत्रिभागहीनात्मप्रदेशाघनीभवति, ततः परेण शेषकालेन निरुद्धसकलयोगः व्युपरतसकलक्रियमनिवृत्ति ध्यानं ध्यायन् चरमकर्मांशं क्षपयति ॥ २८० ॥

**चरमजवे संस्थानं यादृग्यस्योच्छ्रयप्रमाणं च । तस्मात्त्रिजागहीनावगाहसंस्थानपरिणाहः ॥ २८१ ॥**

टीका—उक्त एवार्थोऽस्याः कारिकायाः पुनस्तथाप्युच्यते । चरमजवे पश्चिमजन्मनि । संस्थानमाकारः । यादृग् यस्य सिद्धिमुपजिगमिषोः संस्थानं शरीरोच्छ्राय एव प्रमाणं । तस्य त्रिजागहान्या संस्थानपरिणाहं करोति ॥ २८१ ॥

अथ स जगवान् कीदृगवस्थानिरुद्धेषु योगेषु जवतीत्याह—

**सोऽथ मनोवागुच्छ्वासकाययोगक्रियार्थविनिवृत्तः । अपरिमितनिर्जरात्मा संसारमहार्णवोत्तीर्णः ॥२८२॥**

टीका—स जगवान् केवली वाक्कायमानसोच्छ्वासयोगक्रियार्थविनिवृत्तः निरुद्धसकलक्रियः । अपरिमितनिर्जर आत्मा यस्य बहुकर्मक्षपणयुक्तः संसारमहार्णवादुत्तीर्ण एव ॥ २८२ ॥

स व्युपरतक्रियानिवर्तिध्यानकाले शैलेश्यवस्थां यातीत्याह—

**ईषद्ध्रस्वाक्षरपञ्चकोद्गिरणमात्रतुल्यकालीयाम् । संयमवीर्याप्तबलः शैलेशीमेति गतलेश्यः ॥ २८३ ॥**

---

अव०—चरमभवेऽन्तिममनुष्यजन्मनि, संस्थान देहोच्छ्रायप्रमाणं, यस्य सिद्धिमुपजिगमिपोः, तस्मात्त्रिभागहीनं तृतीयांशेन न्यूनं, संस्थानावगाहनापरिमाणं करोति ॥ २८१ ॥ स भगवान् केवली, तस्यां शैलेश्यवस्थायां, मनोवागुच्छ्वासकाययोगक्रियार्थविनिवृत्तः निरुद्ध-सकलयोगक्रियः, अपरिमितनिर्जरः बहुकर्मक्षपणयुक्त आत्मा यस्य सः, संसारमहासमुद्रादुत्तीर्णः पारप्राप्त एव तिष्ठति ॥ २८२ ॥ ईषत् ह्रस्वानां मनाग् ह्रस्वाक्षराणां पञ्चको 'अइउऋऌ' रूपः तस्योद्गीर्णं प्रोच्चारणं तावन्मात्रायां परिमाणतस्तत्तुल्यकालीयां शैलेशीं एति गच्छति संयमवीर्याप्तबलः सर्वसंवरवीर्येण प्राप्तबलः, विगताऽपगता लेश्या भावरूपा यस्य सः ॥ २८३ ॥

टीका–ईषन्मनाग् ह्रस्वानामक्षराणां 'कखगघङ' इत्येषामुच्चारणकाल उत्किरणमुच्चारणं तत्तुल्यकालीयां तावत्प्रमाणां शैलेशीमेति । संयमेनानुत्तरेण वीर्येण च प्राप्तबलः शैलेशीमेति विगतलेश्यः । शैलेश इव मेरुरिव निष्प्रकंपो यस्यामवस्थायां भवति, साऽवस्था शैलेशीति स्त्रीलिंगशब्दः पृषोदरादिपाठात् संस्क्रियते । शैलानामीशतया शैलानामीश्वरी सा शैलेश्यवस्थेति । विगता लेश्या भावाख्या यस्य स विगतलेश्यः । द्रव्यलेश्याभावाद्भावलेश्यानामसंभवः ॥ २७३ ॥

**पूर्वरचितं च तस्यां समयश्रेण्यामथ प्रकृतिशेषम् । समये समये क्षपयत्यसंख्यगुणमुत्तरोत्तरतः ॥२७४॥**

टीका–प्रथममेव समुद्घातकाले रचितं व्यवस्थापितं समयश्रेण्यां समयपंक्तौ । प्रकृतिशेषं प्रवेद्यनामगोत्रायुषां यदवशिष्टमास्ते तत्प्रकृतिशेषम् । प्रतिसमयं क्षपयन्नसंख्येयगुणमुत्तरेणोत्तरेषु समयेषु ॥ २७४ ॥

**चरमे सयमे संख्यातीतान् विनिहन्ति चरमकर्मांशान् । क्षपयति युगपत्कृत्स्नं वेद्यायुर्नामगोत्रगणम् ॥२७५॥**

टीका–पश्चिमसमयेऽसंख्येयान् विनिहन्ति शाटयति । चरमा ये कर्मांशाः कर्मभागास्तान् युगपत्क्षपयति । त एव कर्मांशा विशिष्यन्ते–वेद्यायुर्नामगोत्रगणमिति । एषां कर्मणां येंऽशा इति तस्मिन् कृत्स्ने क्षपिते वेद्यादिगणे चरमकर्मांशाः क्षपिता एव भवन्तीति ॥ २७५ ॥

---

अव०–पूर्वरचितं प्रथममेव समुद्घातावसरेऽवस्थापितं प्रकृतिशेषं गोत्रवेद्यायुषो यदवशिष्टमास्ते, तत्प्रकृतिशेषं संयमश्रेण्यां अन्तर्मुहूर्तगतसमयप्रमाणायां संस्थाप्य, समये समये क्षपयन्, असंख्यातगुणमुत्तरोत्तरेषु समयेषु ॥ २८४ ॥ चरमकर्मांशानुत्तरप्रकृतीः त्रयोदशसंख्याः विनिहत्यापनीय युगपदेककालम् ॥ २८५ ॥

ततश्च—

**सर्वगतियोग्यसंसारमूलकरणानि सर्वभावीनि। औदारिकतैजसकार्मणानि सर्वात्मना त्यक्त्वा ॥२८६॥**

टीका—सर्वा गतयो नरकतिर्यग्मानुष्यदेवाख्यास्तासां योग्यानि संसारमूलकरणानि संसारपरिभ्रमणप्रतिष्ठानि निमित्तानीत्यर्थः औदारिकादीनि । न खलु औदारिकादिभिर्विना सर्वगतयः प्राप्यन्ते । सर्वभावीनि सर्वत्र भवन्ति नरकादिगतिषु शरीराणि औदारिकं तैजसं कार्मणं च, क्वचिद्वैक्रियतैजसकार्मणानि । सर्वात्मना त्यक्त्वा सर्वेषामात्मा औदारिकादीनां यत्स्वरूपं तेन सर्वेण स्वरूपेण त्यक्त्वा ॥ २८६ ॥

**देहत्रयनिर्मुक्तः प्राप्यर्जुश्रेणिवीतिमस्पर्शाम् । समयेनैकेनाविग्रहेण गत्वोर्ध्वमप्रतिघः ॥ २८७ ॥**

टीका—सिद्ध्यतस्तु नियमेनैव देहत्रयमौदारिकतैजसकार्मणाख्यं भवति । तेन निरवशेषेण मुक्तो निर्मुक्तो विरहितः । ऋजुश्रेणिवीतिं ऋज्व्याः श्रेण्या वीतिं गतिं । प्राप्य । कीदृशीमस्पर्शामविद्यमानस्पर्शाम् । सकलकर्मक्षयसमयादन्यं समयं न स्पृशति, नापि स्वावगाहप्रदेशात्प्रदेशान्तरं स्पृशतीत्यस्पर्शेत्युच्यते । एकेन समयेनासावविग्रहेणावक्रगत्या गत्वोर्ध्वं लोकान्तमप्रतिघोऽप्रतिहतगतिः । पुनरविग्रहग्रहणं समयविशेषणम् । न ह्येकस्मिन् समये विग्रहः संभवतीति ॥ २८७ ॥

---

अव०—सर्वगतियोग्यसंसारमूलहेतूनि, सर्वत्र भवनशीलानि, औदारिकादिशरीराणां यत्स्वरूपं तेन सर्वेण रहितः ॥ २८६ ॥ अवक्रश्रेणिगतिं, अविद्यमानस्पर्शा, अवक्रगत्या अप्रतिहतगतिः ॥ २८७ ॥

स पुनर्गत्वा कावतिष्ठत इत्याह–

**सिद्धिक्षेत्रे विमले जन्मजरामरणरोगनिर्मुक्तः । लोकाग्रगतः सिध्यति साकारेणोपयोगेन ॥ २८८ ॥**

टीका–कात्स्न्येन कर्मनाशः सिद्धिस्तस्याः क्षेत्रमाकाशं । यत्रावगाहः सिद्धस्य । तच्चेषत्प्राग्भारापृथिव्युपलक्षितं तस्याः पृथिव्या उपरितनतलाद्यदुपरितनं योजनं, तस्य यदुपरितनं गव्यूतं, तस्यापि गव्यूतस्योपरितनो यः षड्भागः त्रीणि धनुःशतानि त्रयस्त्रिंशदधिकानि धनुषश्च त्रिभागः । एष गव्यूतस्य षड्भागः । तावत्प्रमाणमाकाशं सिद्धिक्षेत्रमुच्यते । यत्रावगाहन्ते सिद्धा इति । विमल इति विविक्ते मलपटलवर्जिते । जन्मजरामरणेन रोगैश्च ज्वरादिभिर्विरहितः । लोकाग्रगतः । स एव गव्यूतषड्भागो लोकाग्रं, तं प्राप्तः सिध्यति । पूर्वोचितगतिसंस्कारभावे सति सिद्ध उच्यते । तत्रस्थः साकारेणोपयोगेन ज्ञानोपयोगे वर्तमानः सिध्यति न दर्शनोपयोग इति । यस्माल्लब्धयः सर्वाः साकारोपयुक्तस्यैव भवन्तीत्यागमः ॥ २८८ ॥

**सादिकमनन्तमनुपममव्याबाधसुखमुत्तमं प्राप्तः । केवलसम्यक्त्वज्ञानदर्शनात्मा भवति मुक्तः ॥ २८९॥**

टीका–सद्भादिना सादिकं सिद्धत्वपर्यायवत् । अनन्तमपर्यवसानम् । अविद्यमानोपमानमनुपमम् । अविद्यमानव्याबा-

---

अव०–ज्ञानोपयोगेन वर्तमानः ततः परमुपयोगद्वयं सिद्धानामिति ॥ २८८ ॥ सादिकं यस्मिन् सिद्धोऽजनि तमादिं कृत्वा, अनन्तं पुनः क्षयाभावात्, व्याबाधारहितं, केवलान्यद्वितीयानि क्षायिकानि, मुक्तः कृत्स्नकर्मक्षयात् ॥ २८९ ॥

धमव्याबाधम् । रोगातंकादिद्वन्द्वरहितम् । एवंविधं सुखं प्राप्तः । केवलं क्षायिकं सम्यक्त्वम् । केवलं ज्ञानम् । केवलं दर्शनम् । केवलमित्यसहायं सम्यक्त्वं पुद्गलरहितं । एतान्यात्मा यस्य स्वभावः स एवंरूपस्तत्र मुक्त इति ॥ २८९ ॥

केषांचिदभावमात्रं मोक्षस्तन्निराकरणायाह—

**मुक्तः सन्नाभावः स्वालक्षण्यात् स्वतोऽर्थसिद्धेश्च । भावान्तरसंक्रान्तेः सर्वज्ञाज्ञोपदेशाच्च ॥ २९० ॥**

टीका—अष्टाभिः कर्मभिर्मुक्त आत्मा चेतनास्वभावः ज्ञानदर्शनोपयोगलक्षणः । तस्य सर्वात्मना निरन्वयो नाश इति दुःसाध्यं, परिणामित्वात् । प्रदीपशिखावत् । ते हि प्रदीपपुद्गलाः कज्जलाद्याकारेण प्रादुःषन्ति, पुनश्च परिणामान्तरेण जायन्त इति प्रत्यक्षप्रमाणसमधिगम्याः । निरन्वयनाशे च जैनेन्द्रात् प्रतिहेतुदृष्टान्तानामसंभव एव । अतः परिणामित्वात् जीवो ज्ञानदर्शनोपयोगात्मा, न पुनरभावः । स्वलक्षणमुपयोगस्तद्भावः स्वालक्षण्यं तस्मात्स्वालक्षण्यात् । न जातुचिदुपयोगात्मस्वतत्त्वं जहाति जीवः । स्वत एव चार्थाः ( र्थः ) सिद्धाः ( द्धः ) । ज्ञानदर्शनोपयोगस्वभावत्वमात्मनो न कुतश्चिन्निमित्तादुत्पन्नः । स्वत एवासावनादितादृशोऽर्थः । यद्यपि प्राच्योपरत उपयोगान्तरमुदेति, तथाप्युपयोगसामान्यान्न भिद्यते, । ज्ञानस्वभावत्वात् । तथा भावान्तरसंक्रान्तेः, भावो हि भावान्तरत्वेन संक्रामति, न सर्वथोच्छिद्यते

---

अव०—मुक्तः सन् जीवोऽभावोऽसद्रूपः स्वलक्षणस्य ज्ञानदर्शनादेर्भावात्, स्वतोऽर्थसिद्धेः, यद्यपि छाद्मस्थिकोपयोगात्केवल्योपयोगान्तरमुदेति, तथाप्युपयोगसाम्यान्न भिद्यते ज्ञानस्वभावत्वात्, भावान्तरसंक्रान्तेः जलस्थितलवणस्य रूपतोऽदर्शनेऽपि रसत उपलब्धिवत् ॥ २९० ॥

द्रव्यक्षेत्रकालभावापेक्षः, इतो ग्रामान्तरगतपुरुषादिवत्। इतश्च नाभावो मुक्तः। सर्वज्ञाज्ञोपदेशात् वीतरागाः सर्वज्ञास्तत्प्रणीतागम आज्ञा, तदुपदेशात् सिद्धात्मा ज्ञानदर्शनस्वभावोऽस्तीति व्यवस्थितमिति ॥ २९० ॥

**त्यक्त्वा शरीरबन्धनमिहैव कर्माष्टकक्षयं कृत्वा। न स तिष्ठत्यनिबन्धादनाश्रयादप्रयोगाच्च ॥ २९१ ॥**

टीका—इहैव मनुष्यलोके कस्मान्न तिष्ठति? उच्यते—शरीरमेव बन्धनं तद्विहाय। कथं पुनरात्यंतिकशरीरत्यागः? कर्माष्टकक्षयकरणादत्यन्तवियोगः शरीरकस्य। न चासाविहैव तिष्ठति, अनिबन्धनत्वात्। न हि तस्येह किञ्चिन्निबन्धनमासने कारणमस्ति। शरीरादिनिबन्धनमिहावस्थाने भवति। तच्च समस्तमेव ध्वस्तं। अनाश्रयत्वात् मुक्तस्यात्यन्तलघोराश्रयः सर्वस्य लोकाग्रशिखरं भवति। प्रलेपाष्टकलिप्तांबुतुंबकस्येव जलमध्यक्षिप्तस्याष्टासु शीर्णेषु लेपेषु जलस्योपर्येवावस्थानमाश्रयः नाधः, तथा मुक्तस्याप्यत्रोपघ्नो नास्तीत्यत इह नावतिष्ठत इति। तथाऽप्रयोगात् अप्रयोगो व्यापार आत्मनस्तस्य च तादृशी नास्ति क्रिया, ययावस्थानं कल्पयिष्यते। अतोऽप्रयोगाच्च न स तिष्ठत्यत्रेति " २९१ ॥

एवं तर्ह्यूर्ध्वमेव तेन गन्तव्यं नान्यत्रेति कुतो नियम इत्याह—

**नाधो गौरवविगमादशक्य(दसंग)भावाच्च गच्छति विमुक्तः। लोकान्तादपि न परं प्लवक इवोपग्रहाभावात्॥**

---

अव०—इहैव संसारे स न तिष्ठति, अनिबन्धात् मनुजादिभवकारणानामत्यन्तलयात्, अनाश्रयात् मुक्तस्य हि मनुजभवोऽनाश्रयः, किं तु सिद्धिरेव, संसारव्यापाराभावात् शरीरादिकारणाभावाच्च ॥ २९१ ॥ अधो न याति गुरुत्वाभावात्। अशक्योऽयं भावो यत्कर्ममुक्तोऽधो याति। लोकान्तादपि परतो न याति मुक्तः, उपग्रहकारिधर्मद्रव्याभावात्। प्लवकस्तारकः यानपात्रं यथा स्थले न याति उपग्रहाभावात्। २९२।

टीका–यतो गुरुद्रव्यमधो गच्छद्दृष्टं पाषाणादि, तस्य गौरवं नास्त्यपेतकर्मत्वात् । अशक्यत्वाच्च अशक्योऽनुपपन्नः खल्वयं भावो यत्सर्वकर्मविनिर्मुक्तोऽत्यन्तलघुरधो गमिष्यतीति । न च लोकान्तात्परतो गच्छति, उपग्रहकारिधर्मद्रव्याभावात् । प्लवकस्तारकस्तद्वत् यानपात्रवत् । मत्स्यादिवद्वा । स्थलेषु गमनशक्तेरभावात् ॥ २९२ ॥

**योगप्रयोगयोश्चाभावात्तिर्यग् न तस्य गतिरस्ति । सिद्धस्योर्ध्वं मुक्तस्यालोकान्ताद्गतिर्भवति ॥ २९३ ॥**

टीका–योगा मनोवाक्कायलक्षणास्तदभावात् । प्रयोग आत्मनः क्रिया तदभावाच्च । तिर्यग्दिक्षु प्राच्यादिकासु । न तस्य गतिसंभवः । तस्मादधस्तिर्यग्वा गतेरसंभवात् । इहैव चावस्थाने नास्ति किञ्चित्कारणमतो गच्छत्यूर्ध्वमेव सिद्धः । सा चोर्ध्वगतिरालोकान्तादेव भवति, न परतः, उपग्रहाभावादित्युक्तं च ॥ २९३ ॥

अथोर्ध्वगतिस्तस्य निष्क्रियस्य सतः कथं भवतीत्याशंक्याह–

**पूर्वप्रयोगसिद्धेर्बन्धच्छेदादसंगभावाच्च । गतिपरिणामाच्च तथा सिद्धस्योर्ध्वं गतिःसिद्धा ॥ २९४ ॥**

टीका–पूर्वप्रयोगः तृतीये शुक्लध्याने सूक्ष्मक्रियाप्रतिपातिनिवर्तमानेन देहत्रिभागहानिविधानकाले यः संस्कार आहितः।

---

अव०–योगो मनःप्रभृतिकः, प्रयोग आत्मनः क्रिया, तयोरभावान्न तिर्यग्गतिरस्ति । तथा सिद्धस्य मुक्तस्योर्ध्वमेव गतिर्भवति कियद्यावदालोकान्तम् ॥ २९३ ॥ कुंभकारप्रभ्रामितचक्रस्य तद्व्यापाराभावेऽपि भ्रमणवत्, एरंडफलवत्, अलाबुवत्, परमहंसवत्, ज्वलन-धूमवत्, तृतीये शुक्लध्याने सूक्ष्मक्रियया प्रयोगेण॥ २९४ ॥

क्रियायास्तेन पूर्वप्रयोगेण सिद्धेर्बन्धछेदात् असंगभावाच्च तस्य गमन सिध्यति । अतः पूर्वप्रयोगसिद्धेर्दोलागमनवत्पूर्वसंस्काराद्भवति । तथा बन्धनछेदादेरंडबीजकुलिकावत् कर्मबन्धनत्रोटनादूर्ध्वं गतिः सिद्धा भवति मुक्तात्मनः । असंगभावात् । गतलेपालाबुकवत् पयसि प्लवते । संगो लेपस्तदभावादसंगत्वात् । तथा गतिपरिणामाच्च दीपशिखावत् । न हि दीपस्य जातुचिच्छिखाऽग्नेर्वा ज्वाला निमित्ताभावे सति तिर्यगधो वा व्रजति । तस्मादूर्ध्वमेव गच्छति मुक्तात्मेति ॥ १९४ ॥

अनुपमं तत्र सुखमस्तीति कथमवगम्यत इत्याह–

**देहमनोवृत्तिभ्यां भवतः शरीरमानसे दुःखे । तदभावात्तदभावे सिद्धं सिद्धस्य सिद्धिसुखम् ॥ १९५ ॥**

टीका–देहः शरीरं मनश्च तयोर्वृत्तिर्वर्तनं सद्भावः आत्मनि संश्लेषस्तत्र शरीरसंश्लेषाच्छारीरं दुःखमुपजायते । मनःसंबन्धाच्च मानसं दुःखमिष्टवियोगादौ । तस्य च शरीरमनसोरभावे सति तत्कृतस्य दुःखस्याभावः । दुःखाभावे च सिद्धं स्वाभाविकं प्रतिष्ठितमव्याहतं सिद्धिसुखमिति ॥ १९५ ॥

**यस्तु यतिर्घटमानः सम्यक्त्वज्ञानशीलसंपन्नः । वीर्यमनिगूहमानः शक्त्यनुरूपप्रयत्नेन ॥ १९६ ॥**

टीका–यतिस्तपस्वी साधुर्घटमानश्चेष्टमानः प्रवचनोक्तसमस्तक्रियानुष्ठायी । सम्यक्त्वेन शंकादिशल्यरहितेन । सम्य-

---

अव०–घटमानः प्रवचनोक्तसकलक्रियासु प्रयत्नेन चेष्टतेऽहर्निशं क्रियासु ॥ २९६ ॥

ज्ञानेन श्रुतादिना । शीलेन च मूलोत्तरगुणरूपेण संपन्नः । शक्तिर्वीर्यं सामर्थ्यं तदनिगूहमानोऽपह्नवमकुर्वन् स्वशक्त्यनुरूपेण प्रयत्नेन चेष्टते । अहर्निशमनुष्ठेयासु क्रियासु शाठ्यरहितः ॥ २९६ ॥

**संहननायुर्बलकालवीर्यसंपत्समाधिवैकल्यात् । कर्मातिगौरवाद्वा स्वार्थमकृत्वोपरममेति ॥ २९७ ॥**

टीका—संहननं वज्रर्षभनाराचादि । आयुः स्वल्पं । बलहानिर्वा दुर्बलशरीरत्वादसामर्थ्यस्य हेतुः । कालो दुःषमादिः । वीर्यं सम्यग् नास्ति प्रचुरवीर्यत्वाभावः । संपद्धनादिः । समाधिः स्वस्थता चित्तस्याव्यग्रता सापि नास्ति । एषां संहननादीनां वैकल्याद्विकलत्वात् । कर्मणां चातिगौरवात् ज्ञानावरणादीनामतिगौरवं निकाचनावस्थाप्राप्तिः । स्वार्थः सकलकर्मक्षयः । तमकृत्वा म्रियते उपरममेतीति तपस्वी ॥ २९७ ॥

**सौधर्मादिष्वन्यतमकेषु सर्वार्थसिद्धिचरमेषु । स भवति देवो वैमानिको महर्द्धिद्युतिवपुष्कः ॥ २९८ ॥**

टीका—सम्यग्दृष्टिर्वैमानिकेष्वेवोत्पद्यते सौधर्मादिषु कल्पेषु द्वादशसु, नवसु च ग्रैवेयकेषु, पञ्चसु सर्वार्थसिद्धिविमानेषु स्वर्गप्रपञ्चव्यवस्थितेषु देवः संजायते वैमानिकान्यतमस्थाने विमानवासीत्यर्थः । महती ऋद्धिर्द्युतिर्वपुश्च यस्य स महर्द्धिद्युतिवपुष्कः । ऋद्धिः परिवारादिका । द्युतिः शरीरच्छाया । वपुः शरीरं तदपि महत्त्वं ( नापचरितं ) किं त्वहीनं ।

---

अव०—वीर्यसंपत्साहससमृद्धिः । एतेषां संहननादीनां वैकल्यात् । कर्मणां निकाचनावस्थाप्राप्तिः । कर्मक्षयमकृत्वाऽविधाय उपरमं विनाशमेति गच्छति ॥ २९७ ॥ नवसु ग्रैवेयकेपु । 'अर्ह मह पूजायां' इति धातोर्महान्ति पूज्यानि ऋद्धिद्युतिवपूंषि यस्य ॥ २९८ ॥

समचतुरस्रं संस्थानं वैक्रियं उत्तरोत्तरसंस्थानप्राप्तौ च स्थितिः प्रभावः । सुखादिभिः प्रकृष्टं प्रकृष्टतरं प्रकृष्टतमं च संभवतीति ॥ २९८ ॥

**तत्र सुरलोकसौख्यं चिरमनुभूय स्थितिक्षयात्तस्मात्। पुनरपि मनुष्यलोके गुणवत्सु मनुष्यसंघेषु ॥२९९॥**

टीका–तत्रेति सौधर्मादौ सुरलोके सौख्यमनुभूय चिरं स्थितिभेदादुपर्युपरीति । ततः स्थितिक्षयादायुषः । तस्मात्सुरलोकान्मनुष्यलोकमागत्य गुणवत्सु मनुष्येषु विशिष्टान्वयेषु जातिकुलाचारसंपन्नेषु संघेष्विति बहुपुरुषकेषु ॥ २९९ ॥

**जन्म समवाप्य कुलबन्धुविभवरूपबलबुद्धिसंपन्नः । श्रद्धासम्यक्त्वज्ञानसंवरतपोबलसमग्रः ॥३००॥**

टीका–समवाप्य जन्मलाभं जन्म । बन्धुः स्वजनलोकः । कुलं पितुरन्वयः । विभवो द्रव्यसंपत् । रूपं विशिष्टशरीरावयवसन्निवेशः । बलं वीर्यसंपत् । बुद्धिरौत्पत्तिक्यादिः । एभिर्बन्धुकुलादिभिः संपन्नः संबन्धः । श्रद्धा भगवदर्हत्सु प्रीतिरतिशयवती, दक्षिणीयेषु च यतिषु श्रद्धा परितोषः। सम्यक्त्वं तत्त्वार्थश्रद्धानलक्षणम् । ज्ञानं मत्यादिज्ञानं यथासंभवम् । संवर आश्रवनिरोधलक्षणः तपोबलं तपसि द्वादशविधे उत्साहोऽनुष्ठानं च। एभिः समग्रः संपूर्णः संयुक्तो वेति ॥ ३०० ॥

---

अव०–विशिष्टान्वयेषु बहुपुरुषेषु गुणवत्सु सम्यक्त्वादिगुणयुतेषु ॥ २९९ ॥ उत्पत्तिमात्मलाभं प्राप्य । कुलमुग्रादि । बन्धुः पित्रादिवंशः । विभवो धनादिः । रूपं सुन्दराकारादि समतास्वभावं । बलं प्राणं । बुद्धिरौत्पत्तिक्यादिका । ताभिः संपन्नः ॥ ३०० ॥

**पूर्वोक्तभावनाभिर्भावितान्तरात्मा विधूतसंसारः। सेत्स्यति ततः परं वा स्वर्गान्तरितस्त्रिभवभावात् ।३०१।**

टीका–पूर्वोक्ता द्वादश भावना या अनित्यादिकाः । एताभिर्भावितो वासितोऽन्तरात्मा ज्ञानदर्शनोपयोगस्वभावः विधूतस्त्यक्तो विक्षिप्तः संसारो येन नरकादिगतिभेदः स विधूतसंसारः । उत्तीर्णप्रायः संसारसागरात् स्वल्पशेषभव इत्यर्थः। सेत्स्यति सिद्धिं प्राप्स्यति एवंविधक्रियानुष्ठातायां,ततः,परं प्रकर्षतः स्वर्गान्तरितस्त्रिभवभावात् संप्रति मनुष्य उक्तानन्तरक्रियानुष्ठायी, ततो देवस्तस्मात्प्रच्युतः पुनर्मनुष्यः संसेत्स्यतीति । त्रीन् भवाननुभूय त्रीणि जन्मानि लब्ध्वेत्यर्थः ॥३०१॥

एवं यतेश्चर्यामभिधाय गृहाश्रमिणं प्रत्याह–

**यश्चेह जिनवरमते गृहाश्रमी निश्चितः सुविदितार्थः।दर्शनशीलव्रतभावनाभिरभिरञ्जितमनस्कः ॥३०२॥**

टीका–इह मनुष्यलोके यो गृहाश्रमी जन्म लब्ध्वा गृहस्थ एव तीर्थकरवचने सुविदितार्थः सम्यक्श्रितः सत्यं भगवभिरुक्तं, एतदेव संसाराद्उत्तारकं प्रवचनं । दर्शनं तत्त्वार्थश्रद्धानं । शीलमुत्तरगुणाः । व्रतग्रहणादनुव्रतानि । अनित्यादिका द्वादश भावनाः । एवं दर्शनादिभिरभिरञ्जितं वासितं मनो यस्य स भवति अभिरञ्जितमनस्कः ॥ ३०२ ॥

---

अव०—भावितोऽन्तरात्मा मनो यस्य सः । ततः परं मनुष्यलोकात् स्वर्गान्तरितः ॥ ३०१ ॥ इह मनुष्यलोके जिनागमे मनुष्यः श्रावकः निश्चयेन कृतनिश्चयः । अतिशयज्ञाताभिधेयः, दर्शनं सम्यक्त्वं शीलमुत्तरगुणाः, व्रतानि प्राणातिपातादिनिवृत्तिरूपाणुव्रतानि, भावना अनित्यभावनादिका द्वादश, एभी रंजितं वासितं मनो यस्य सः ॥ ३०२ ॥

**स्थूलवधानृतचौर्यपरस्त्रीरत्यरतिवर्जितः सततम् । दिग्व्रतमिह देशावकाशिकमनर्थविरतिं च ॥ ३०२ ॥**

टीका—स्थूलात्प्राणातिपाताद्विरतिः प्रथममनुव्रतम् । स्थूला बादरा प्राणिनो ये तेभ्यो विरतिस्तेषामवधः । न सूक्ष्मेभ्यो विरतिः पृथिव्यादिकायेभ्यो विरतिः । अथवा संकल्पजः स्थूलस्तस्माद्विरतिः । संकल्पं हृदि व्यवस्थाप्य व्यापादयामीति स्थूलप्राणातिपातस्तस्माद्विरतिः प्रथममणुव्रतम् । न पुनरारंभजाद्विरतिरिति । स्थूलमनृतं यन्निरोधलक्षणपूर्वकमादित्यमंडलाधिरोहणे सत्यन्यथा वृत्तमन्यथा भाषते, तस्माद्विरतिः, न परिहासादिभाषणात् । चौर्यमदत्तस्यादानं स्थूलं, यस्मिन्नपहृते चौर्यं इति व्यपदिश्यते, तत्स्थूलं तस्माद्विरतिः। परस्त्रीति स्वदारसन्तोषव्रतस्य परपरिगृहीतस्त्रीगमनं वेश्यापरिभोगो वा स्थूलं तस्माद्विरतिः । परदारनिवृत्तिव्रतस्य तु परपरिगृहीतस्त्रीपरिहारः, न तु वेश्यापरिहारः । रत्यरतिभ्यां वर्जितस्त्यक्तः। सततं सर्वदा रतिर्विषयेषु प्रीतिः, अरतिरुद्वेगः व्रतपरिपालनादिक्रियास्विति। क्षेत्रवास्त्वादिष्विच्छा। तस्याश्च परिमाणं व्रतं एतावन्ति वास्तूनि क्षेत्राणि हिरण्यं सुवर्णमेतावत् तथा धनं धान्यं कटाहादि चोपस्करजातं सर्वं परिमितं धार्यमिति। परिमाणादुपर्युपरि स्थूलं तस्माद्विरतिरणुव्रतम् । साक्षादनुपाल्यमपि शेषं व्रतग्रहणादाक्षिप्तं द्रष्टव्यम् । रात्रिभोजनविरतिश्च यथाशक्तीति । दिग्व्रतं चतसृषु दिक्षु ऊर्ध्वमधश्च गमनपरिमाणं एतावद्गन्तव्यं न परत इति परतो गमनाद्विरतिः ।

---

अव०—स्थूला बादराः प्राणिनः तेभ्यो विरतिस्तेषामवधः, न पृथिव्यादिस्थावरेभ्यः । कन्यादिविषयमनृतमन्यथाभाषणं । बृहच्चौर्यं यस्मिन् हृते चौर इति व्यपदिश्यते । परपरिगृहीतस्त्रीगमनं । रतिर्विषयादिषु प्रीतिः, अरतिर्व्रतादिषूद्वेगः, ताभ्यां सदा वर्जितः । दिग्व्रतं षट्सु दिक्षु गमनपरिमाणं देशावकाशिकं प्रतिदिनगमनादेर्मर्यादाकरणं । अनर्थदंडः शरीरादीनां प्रयोजनं विना पापोपदेशादिः ॥ ३०२ ॥

चतुर्मास्यादिषु स गृह्णाति । तथा देशावकाशिकं व्रतं प्रतिदिवसमध्ये एतावती मर्यादा मम गमनस्येति, तस्यैव सकृद्गृहीतस्य दिग्व्रतस्य देशोऽवकाशं कल्पयति देशावकाशिकं व्रतम् । अनर्थदंडविरतिर्व्रतं प्रयोजनाभावोऽनर्थः विना प्रयोजनेनात्मानं दंडयति अग्निशस्त्रादिप्रदानादिनाऽनेकभेदेन तस्माद्विरतिर्व्रतम् ॥ ३०३ ॥

**सामायिकं च कृत्वा पौषधमुपभोगपारिमाण्यं च। न्यायागतं च कल्प्यं विधिना पात्रेषु विनियोज्यम्॥३०४॥**

टीका—सामायिकं प्रतिक्रमणं, अथवा चैत्यायतनसाधुसन्निधौ वा यावदास्ते तावत्सामायिकं करोति—"करोमि भदन्त सामायिकं, सावद्यं योगं प्रत्याख्यामि, यावन्नियमं भगवदर्हद्बिंबसाधून् वा पर्युपासे द्विविधं त्रिविधेनेत्याह" । तथा पौषधव्रतं कृत्वा । पौषध आहारादिः तस्य वारणं निवारणं प्रतिषेधः पौषधः । स चाहारशरीरसत्कारब्रह्मचर्याव्यापारभेदेन चतुर्विधः । अष्टमीपौर्णमास्यादिषु क्रियते । उपभोगपरिमाणव्रतं उपभोगः पुष्पधूपस्नानांगरागादिः, परिभोगो वस्त्रशयनादिः । स च द्वेधा भोजनतः कर्मतश्च । भोजनतोऽशनपानखाद्यस्वाद्यरूपः मांसमद्यानन्तकायमध्वादिविषयः । कर्मतः पञ्चदशभेदः अंगारकरणवनशकटभाटकादिलक्षणः । अधिकाद्विरतिर्मांसादेश्च उपभोगपरिभोगपरिमाणत्वतः

---

अव०—सामायिकं द्विविधं त्रिविधेन योगेन सावद्ययोगप्रत्याख्यानं प्रतिक्रमणं च । पौषध सत्त्वाहारशरीरसत्कारब्रह्मचर्याव्यापाररूपचतुर्विधोऽष्टम्यादिषु विशेषेण तं करोति । उपभोगोऽन्नपानपुष्पधूपस्नानांगरागादिः । परिभोगो वस्त्रालंकारांगनाशयनासनसदनादिस्तयोः परिमाणं, यत्र व्रते कृत्वा विधाय न्यायागतमगर्हितव्यवहारेणोपात्तं साधूनां देयवस्तु कल्प्यं साधूनामनुद्दिश्य कृतं । विधिनेति निष्पन्नपाकः सर्वोऽपि सत्कारपूर्वकम् ॥ ३०४ ॥

( व्रतं )। तत्राऽन्योऽतिथिसंविभागः । स च पौषधपारणकाले न्यायागतस्यागर्हितव्यापारेणोपात्तस्य तंडुलघृतादेरुपसा-धितस्य कल्पनीयस्य साधूद्देशेनाकृतस्य । विधिनेति यावन्निर्वृत्तः पाकः सर्वस्य सत्कारपूर्वकं साधूनां पात्रेषु दानं विनि-योगः । पात्रग्रहणात्साधुभ्यो गृहमागतेभ्यो देयं, न स्वभाजनेषु कृत्वा नीत्वा साधुवसतौ देयमिति । यच्च साधुभ्यो न दत्तं पारणकाले तन्नाभ्यवहरति स्वयमिति ॥ ३०४ ॥

**चैत्यायतनप्रस्थापनानि कृत्वा च शक्तितः प्रयतः । पूजाश्च गन्धमाल्याधिवासधूपप्रदीपाद्याः ॥ ३०५ ॥**

टीका—चैत्यं चितयः प्रतिमा इत्येकार्थाः । तेषामायतनमाश्रयः चैत्यकुलानि । प्रकृष्टानि स्थापनानि प्रस्थापनानि । यथा महत्या विभूत्या वादित्रनृत्यतालानुचरस्वजनपरिवारादिकया प्रस्थापनं प्रतिष्ठेति तानि कृत्वा शक्तितः प्रयत्नवान् यथा प्रवचनोद्भावनं भवति तथा कृत्वेति । पूजाः सपर्याः । गन्धो विशिष्टद्रव्यसंबन्धी । माल्यं पुष्पम् । अधिवासः पट-वासादिः । धूपः सुरभिद्रव्यसंयोगजः । प्रदीपः प्रदीपदानम् । आदिग्रहणादुपलेपनसंमार्जनखण्डस्फुटितसंस्करणचित्रक-र्माणि चेति ॥ ३०५ ॥

---

अव०—चैत्यानि जिनबिंबानि, आयतनानि तेषामेवागाराणि, प्रस्थापना तेषामेव प्रकृष्टमहाविभूत्या वादित्रगीतनृत्यतालानुचरस्वजन-परिवारादिकया प्रतिष्ठा । एतानि कृत्वा विधाय शक्तितः स्वसामर्थ्यानुसारेण प्रयतो यथा प्रवचनप्रोद्भावना स्यात्तथा । पूजा सपर्या ॥ ३०५ ॥

**प्रशमरतिनित्यतृषितो जिनगुरुसत्साधुवन्दनाभिरतः। संलेखनां च काले योगेनाराध्य सुविशुद्धाम्॥३०६॥**

टीका—प्रशमः कषायादिजयस्तत्र रतिः प्रीतिस्तस्यां प्रशमरतौ नित्यमेव तृषितः साभिलाषः "कदा साधुत्वमवाप्य कषायरिपुं जेष्यामीति"। जिनानां तीर्थकृतां गुरूणामाचार्योपाध्यायादीनां, साधुजनस्य साधुलोकस्य च वन्दने नमस्करणे प्रतिक्षणमभिरतः। मारणान्तिकसंलेखनाकाले प्रत्यासन्ने जीवितछेदे। द्रव्यतो भावतश्च संलिख्य शरीरं कषायादींश्च। योगेनेति ध्यानेनाराध्याभिमुखीकृत्य धर्मेणाज्ञाविचयादिना। सुष्ठु बाढं विशुद्धां निर्मलां जीवितमरणाशंसादिदोषरहितां कृत्वेति संबन्ध्य। एवं गृहे स्थितो द्वादशविधं श्रावकधर्ममनुपाल्य पञ्चाणुव्रतानि स्थूलप्राणातिपातविरत्यादीनि इच्छापरिमाणान्तानि, त्रीणि गुणव्रतानि दिक्परिमाणमुपभोगपरिभोगपरिमाणमनर्थदंडविरतिश्च। शिक्षाव्रतानि चत्वारि सामायिकं देशावकाशिकं पौषधोपवासोऽतिथिसंविभागश्चेति द्वादशप्रकारमप्यनुपाल्य संलेखनां चाराध्य ॥ ३०६ ॥

**प्राप्तः कल्पेष्विन्द्रत्वं वा सामानिकत्वमन्यद्वा। स्थानमुदारं तत्रानुभूय च सुखं तदनुरूपम् ॥ ३०७ ॥**

---

अव०—प्रशमे कषायादिजये रतिः प्रीतिस्तस्यां नित्यं सदाकालं तृषितः साभिलाषः। जिनेऽर्हत्सु, गुरुष्वाचार्यादिषु, सत्साधुषु, वन्दनाभिरतो नमस्करणेन प्रीतः। काले स्वायुश्छेदासन्ने। संलेखनां कषायाद्यल्पीकृततत्पःक्रियां। योगेन शुभध्यानेन सुविशुद्धामाराध्याभिमुखीकृत्य ॥ ३०६ ॥ प्राप्तो लब्धं कल्पेषु सौधर्मादिदेवलोकेषु अधिपतित्वं वा सामानिकत्वमन्यद्वा सामान्यदेवत्व विमानवासविशिष्टमवाप्य तत्र स्थानानुरूपं सुखम् ॥ ३०७ ॥

टीका—कल्पाः सौधर्मादयस्तेष्विन्द्रत्वमधिपतित्वमवाप्य । कदाचिद्वा सामानिकत्वमिन्द्रतुल्यत्वम् । इन्द्रत्वरहितास्तु सामानिका भवन्ति शेषं स्थित्यादि तुल्यम् । अन्यद्वा स्थानमुदारं विशिष्टं सामान्यदेवत्वं प्राप्य वैमानिकेषु । तत्र च देवजन्मसुखं स्थानानुरूपमनुभूय जघन्यमध्यमोत्कृष्टम् ॥ २०७ ॥

**नरलोकमेत्य सर्वगुणसंपदं दुर्लभां पुनर्लब्ध्वा । शुद्धः स सिद्धिमेष्यति भवाष्टकाभ्यन्तरे नियमात् ॥२०८॥**

टीका—स्थितिक्षयात्ततः प्रच्युतो मनुष्यलोके समागत्य गुणवत्सु मनुष्येषु आर्यदेशादिषु जातिकुलविभवरूपसौभाग्यादिकां संपदं सम्यक्त्वादिगुणसंपदं च लब्ध्वा । शुद्धः सकलकर्मकलंकनिर्मुक्तः । स एवं सुखपरंपरया सिद्धिमेष्यति । अष्टानां भवानामर्वागभ्यन्तरे नियमेनैवेति । तस्मादादरवता गृहस्थधर्मोऽप्यनुपाल्यः, पर्यन्ते च साधुधर्म इति ॥ २०८ ॥

**इत्येवं प्रशमरतेः फलमिह स्वर्गापवर्गयोश्च शुभम् । संप्राप्यतेऽनगारैरगारिभिश्चोत्तरगुणाढ्यैः ॥२०९॥**

टीका—इतिशब्दः प्रकरणपरिसमाप्तिप्रदर्शनार्थः । एवमिति वर्णितेन न्यायेन । इहेति मनुष्येष्वेव बाहुल्येन स्वर्गफलम् । तिर्यग्गतौ च केषांचित्स्वर्गावाप्तिर्नान्यत्र । अपवर्गफलं पुनर्मनुष्येष्वेव । शुभमिति वैषयिकस्वाभाविकभेदादुभयमपि फलं शुभमिति । तदेव तदपवर्गाख्यं फलं प्राप्यतेऽनगारैः साधुभिः । अगारिभिश्च स्वर्गफलं प्राप्यते । अपवर्गफलं तु पारंपर्येणावाप्यते गृहाश्रमिभिरिति । कीदृशैरनगारैरगारिभिर्वा ? उत्तरगुणाढ्यैः प्रधानगुणयुक्तैः मूलोत्तरगुणसंपन्नैराढ्यैर्निरवद्याशेषसंयमानुष्ठायिभिरिति ॥ २०९ ॥

---

अव०—आर्यदेशजातिकुलविभवरूपसौभाग्यादिकां सम्यक्त्वादिगुणसंपदं च ॥ २०८ ॥ मनुष्येषु ॥ २०९ ॥

उक्तो योऽर्थः प्रकरणप्रारंभात् प्रभृति स सर्व एव प्रवचने न मया स्वमनीषिकया किञ्चित्कल्पितमत्र प्रवचनस्य च महानुभावत्वमनयार्यया दर्शयति—

**जिनशासनार्णवादाकृष्टां धर्मकथिकामिमां श्रुत्वा । रत्नाकरादिव जरत्कपर्दिकामुद्धृतां भक्त्या ॥३१०॥**

टीका—जिनशासनमर्णव इव जिनशासनार्णवः । बहुत्वादनेकाश्चर्यनिधानं च । उपमानोपमेयभावः । तस्माज्जिनशासनसागरान्निकृष्टामाक्षिप्तां जिनशासनोदधौ निहितानर्थानुपादाय लब्ध्वा धर्मकथा कथिता । न तु विस्तारेणोदिता । संक्षिप्तार्थामिमामाकर्ण्य श्रुत्वाऽवधार्य रत्नाकरादिव जरत्कपर्दिकामित्यात्मन औद्धत्यं परिहरति । रत्नाकरादनेकरत्ननिधेः । तस्माद्यथा जरत्कपर्दिका मृजावती शोभना भवति जरत्कपर्दिका तु परिपेलवा निःसारा च मयाल्पमतिना, तद्वदियं जरत्कपर्दिकास्थानीया आकृष्टा तां जरत्कपर्दिकावदुद्धृतां भगवत्सु साधुषु भक्तिर्या प्रीतिस्तया प्रेरितेनाकृष्टामिति । आकृष्टेति प्रशमरतिः संबध्यते, उद्धृतेति कपर्दिका संबध्यते इति ॥ ३१० ॥

निस्साराप्येषा प्रशमरतिः—

**सद्भिर्गुणदोषज्ञैर्दोषानुत्सृज्य गुणलवा ग्राह्याः । सर्वात्मना च सततं प्रशमसुखायैव यतितव्यम् ॥३११॥**

---

अव०—कविरात्मन औद्धत्यं परिहरति—धर्मकथिकां द्विविधधर्मप्रतिपादिकां इमां प्रशमरति रत्नाकरादिव जीर्णकपर्दिकामिव प्रशमप्रीत्या ॥ ३१० ॥ सर्वात्मनाऽशेषप्रकारैः सततमनवरतं, यत्नः कार्यः ॥ ३११ ॥

टीका—सन्तः साधवस्तैर्गुणदोषज्ञैर्गुणांश्च दोषांश्च अवगच्छन्ति ये ते गुणदोषज्ञास्तैः सद्भिरत्र दोषानुत्सृज्य शब्दच्छन्दोऽर्थादिकान् परित्यज्य गुणलवा ग्राह्याः । लवग्रहणादल्पगुणत्वं दर्शयति । कियतो गुणान् वक्तुं शक्तोऽस्मदादिः । सर्वात्मना सर्वप्रयत्नेन । सततं सदैव । वैषयिकसुखनिरभिलाषेण प्रशमसुखार्थिना श्रुत्वा यतितव्यमिति ॥ ३११ ॥

यच्चासमंजसमिह छन्दःशब्दसमयार्थतो मयाभिहितम् । पुत्रापराधवत्तन्मर्षयितव्यं बुधैः सर्वम् ॥ ३१२ ॥

टीका—असमञ्जसमघटमानम् । यदिह प्रशमरतौ । केनाकारेणासमञ्जसं ? छन्दसा, शब्दशास्त्रेण, समयः सिद्धान्तस्तदर्थस्यान्यथाप्ररूपणेन । पुत्रापराधवत् मर्षयितव्यम् । यथा पुत्रस्य शिशोरपराधं पिता मृष्यति क्षमते, तथा भवद्भिर्बुधैः सर्वमशेषं क्षन्तव्यमिति ॥ ३१२ ॥

सर्वसुखमूलबीजं सर्वार्थविनिश्चयप्रकाशकरम् । सर्वगुणसिद्धिसाधनधनमर्हच्छासनं जयति ॥ ३१३ ॥

टीका—सर्वमेव सुखं सर्वसुखं दुःखलेशाकलंकितं मुक्तिसुखं, तस्य मूलमाद्यं प्रथमं बीजमर्हच्छासनम् । अथवा वैषयिकाणां सुखानां मुक्तिसुखस्य च सर्वेषां सुखानां मूलबीजं जिनशासनम् । सर्वे च तेऽर्थाश्च सर्वार्थाः पञ्चास्तिकायाः सप्त-

---

अव०—इह प्रशमरतिप्रकरणेऽसमंजसमसंगतं, छन्दो रचनाविशेषः, शब्दः संस्कृतादिभेदभिन्नः, समयः सिद्धान्तः, तस्यार्थोऽभिधेयं मर्षयितव्यं क्षन्तव्यम् ॥ ३१२ ॥ ऐहिकामुष्मिकसुखमूलकारणं सर्वभावानां विनिश्चयो निर्णयस्तस्य प्रकटनकरं क्षान्त्यादिसर्वगुणसिद्धिसाधने धनमिव जयमनुभवति ॥ ३१३ ॥

मयाः सर्वेषु सर्वार्थेषु यो विनिश्चयः परिच्छेदः । एवं संसारस्थितिघटना मुक्तिमार्गश्चेति तं प्रकाशयति प्रतिपादयति जैन-
मेव शासनम् । सर्वे च ते गुणाश्च सर्वगुणाः । सर्वगुणानां सिद्धिर्निष्पत्तिः सर्वगुणसिद्धिः । साध्यते येन धनेन । तच्च
धनमिदमेव प्रवचनम् । अतः सर्वगुणसिद्धसाधनधनमर्हच्छासनं द्रव्यपर्यायनयप्रपञ्चात्मकमन्यशासनन्यग्भावेन जयति॥२१३॥

॥ इति श्रीप्रशमरतिटीका ॥

॥ इति श्रीप्रशमरतिः सटीका ॥

# श्री जैनधर्म प्रसारक सभा तरफथी छपाएला संस्कृत मागधी ग्रंथो.

| | |
|---|---|
| १ श्री त्रिषष्टि शलाका पुरुषचरित्र. पर्व १ थी १० मूल. | ७—८—० |
| १—०—० पर्व पहेलुं. ०—१२—० पर्व २ जुं. १—१२—० पर्व ३—४—५—६. | |
| १—०—० पर्व ७ मुं. १—८—० पर्व ८—९. १—८—० पर्व १० मुं. | |
| २ श्री विजयचंद केवली चरित्र मागधी. मूल. | ०—८—० |
| ३ श्री यशोविजयजीकृत ग्रंथमाला ( दश ग्रंथोनो संग्रह. ) | १—०—० |
| ४ श्री हरिभद्रसूरिकृत ग्रंथमाला ( त्रण ग्रंथोनो संग्रह. ) | ०—४—० |
| ५ श्री सिद्धसेन दिवाकर ग्रंथमाला ( त्रण ग्रंथोनो संग्रह. ) | ०—४—० |
| ६ श्री प्रबोधचिंतामणि मूल. | ०—८—० |
| ७ श्री द्वात्रिंशत् द्वात्रिंशिका सटीक | छपाय छे. |
| ८ श्री कर्मग्रंथ स्वोपज्ञ टीकायुक्त | ,, |
| ९ श्री योगबिंदु सटीक | ,, |

| | | |
|---|---|---|
| | | २—८—० |
| १० | श्री वासुपूज्य चरित्र. मूल. पद्यबंध. | छपाय छे. |
| ११ | श्री शांतिनाथ चरित्र. गद्यबंध | ,, |
| १२ | श्री पंचाशक टीकायुक्त | ,, |
| १३ | श्री परिशिष्ट पर्व | ,, |
| १४ | श्री चउसरण–आउरपच्चरकाण–नक्तपरिज्ञा–संथारग. | ०—१२—८ |
| १५ | श्री प्रशमरति सटीक. | |

मुंबई–निर्णयसागर प्रेसमां बाळकृष्ण रामचंद्र घाणेकरने प्रसिद्ध करनारके लीये छपी.